# पातञ्जलदर्शनम्।

श्रीभोजदेवकृतवृत्तिसमेतम्।

पण्डितकुलपति·वि, ए, उपाधिधारि-
श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्यात्मजाभ्यां
पण्डित-श्रीआशुबोध विद्याभूषण·पण्डित·श्रीनित्यबोध-
विद्यारत्नाभ्यां

संस्कृतं प्रकाशितञ्च।

तृतीय संस्करणम्।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितम्।

इं १९२६।

प्रकाशक— { पण्डित-श्रीआशुबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान— { २ नं०, रमानाथ मजुमदार ष्ट्रीट्, आम्हार्ष्ट-ष्ट्रीट् पोष्ट-अफिस, कलिकाता।

प्रिण्टर—बि, बि, मुखर्जी।

२ नं०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।

# पातञ्जलदर्शनम् ।

## भोजदेवकृतवृत्तिसमेतम् ।

देहार्द्धयोगः शिवयोः सः श्रेयांसि तनोतु वः ।
दुष्प्रापमपि यत्स्मृत्या जनः कैवल्यमश्नुते ॥ १ ॥
त्रिविधान्यपि दुःखानि यदनुस्मरणान्नृणाम् ।
प्रयान्ति सद्यो विलयं तं स्तुमः शिवमव्ययम् ॥ २ ॥
पतञ्जलिमुनेरुक्तिः काऽप्यपूर्वा जयत्यसौ ।
पुं-प्रकृत्योर्वियोगोऽपि योग इत्युदितो यया ॥ ३ ॥

जयन्ति वाचः फणिभर्त्तुरान्तर-
स्फुरत्तमस्तोमनिशाकरत्विषः ।
विभाव्यमानाः सततं मनांसि
सतां सदानन्दमयानि कुर्वते ॥ ४ ॥

शब्दानामनुशासनं विदधता पातञ्जले कुर्वता
वृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके ।
वाक्-चेतो-वपुषां मलः फणिभृतां भर्त्त्रेव येनोद्धृत-
स्तस्य श्रीरणरङ्गमल्लनृपतेर्वाचो जयत्युज्ज्वलाः ॥ ५ ॥
दुर्बोधं यदतीव तद्धि जहति स्पष्टार्थमित्युक्तिभिः
स्पष्टार्थेष्वतिविस्तृतिं विदधति व्यर्थैः समासादिकैः ।
अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैर्भ्रमं तन्वते
श्रोतॄणामिति वस्तुविप्लवकृतः सर्वेऽपि टीकाकृतः ॥ ६ ॥

उत्सृज्य विस्तरमुदस्य विकल्पजालं
फल्गुप्रकाशमवधार्य्य च सम्यगर्थान् ।
सन्तः ! पतञ्जलिमते विवृतिर्मयेय-
मातन्यते बुधजनप्रतिबोधहेतुः ॥ ७ ॥

## अथ योगानुशासनम् ॥ १ ॥

अनेन सूत्रेण शास्त्रस्य सम्बन्धाभिधेयप्रयोजनान्याख्यायन्ते। अथशब्दोऽधिकारद्योतको मङ्गलार्थकश्च। योगो युक्तिः समाधानम्। युज समाधौ। अनुशिष्यते व्याख्यायते लक्षणभेदोपायफलैर्येन तदनुशासनम्। योगस्यानुशासनं योगानुशासनं, तत् आ-शास्त्रपरिसमाप्तेरधिकृतं बोद्धव्यमित्यर्थः। तत्र शास्त्रस्य व्युत्पाद्यतया योगः ससाधनः सफलोऽभिधेयः। तद्व्युत्पादनञ्च फलं, व्युत्पादितस्य योगस्य कैवल्यं फलम्। शास्त्राभिधेययोः प्रतिपाद्य-प्रतिपादकभावः सम्बन्धः। अभिधेयस्य योगस्य च तत्फलस्य च कैवल्येन साध्य-साधनभावः। एतदुक्तं भवति—व्युत्पाद्यस्य योगस्य साधनानि शास्त्रेण प्रदर्श्यन्ते, तत्साधनसिद्धो योगः कैवल्याख्यं फलमुत्पादयति ॥ १ ॥

तत्र को योगः ? इत्याह—

## योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

चित्तस्य निर्मलसत्त्वपरिणामरूपस्य, या वृत्तयोऽङ्गाङ्गिभावपरिणामरूपाः, तासां निरोधो बहिर्मुखतया परिणतिविच्छेदादन्तर्मुखतया प्रतिलोमपरिणामेन स्वकारणे लयो योग इत्याख्यायते। स च निरोधः सर्वासां चित्तभूमीनां सर्वप्राणिनां धर्मः कदाचित् कस्याञ्चित् बुद्धिभूमौ आविर्भवति। ताश्च क्षिप्तं, मूढं, विक्षिप्तम्, एकाग्रं, निरुद्धमिति चित्तस्य भूमयः चित्तस्यावस्थाविशेषाः। तत्र क्षिप्तं रजस उद्रेकादस्थिरं बहिर्मुखतया सुखदुःखादिविषयेषु विकल्पितेषु व्यवहितेषु वा रजसा प्रेरितं, तच्च सदैव दैत्यदानवादीनाम्। मूढं तमस उद्रेकात् कृत्याकृत्यविभागमन्तरेण क्रोधादिभिः विरुद्धकृत्येष्वेव नियमितं, तच्च सदैव रक्षःपिशाचादीनाम्। विक्षिप्तं सत्त्वोद्रेकात् वैशिष्ट्येन परिहृत्य दुःखसाधन

सुखसाधनेष्वेव शब्दादिषु प्रवृत्तं, तच्च सदैव देवानाम्। एतदुक्तं भवति—रजसा प्रवृत्तिरूपं, तमसा परापकारनियतं, सत्त्वेन सुखमयं चित्तं भवति। एतास्तिस्रश्चित्तावस्थाः समाधावनुपयोगिन्यः, एकाग्र-निरुद्धरूपे द्वे च सत्त्वोत्कर्षात् यथोत्तरमवस्थितत्वात् समाधावुपयोगं भजेते; सत्त्वादिक्रमव्युत्क्रमे तु अयमभिप्रायः,—द्वयोरपि रजस्तमसोरत्यन्तहेयत्वेऽप्येतदर्थं रजसः प्रथममुपादानं, यावन्न प्रवृत्तिर्दर्शिता तावन्निवृत्तिर्न शक्यते दर्शयितुमिति द्वयोर्व्यत्ययेन प्रदर्शनम्। सत्त्वस्य तु एतदर्थं पश्चात् प्रदर्शनं यत्, तस्योत्कर्षेणोत्तरे द्वे भूमी योगोपयोगिन्याविति। अनयोर्द्वयोरेकाग्र-निरुद्धयोर्भूम्योर्यश्चित्तस्यैकाग्रतारूपः परिणामः, स योग इत्युक्तं भवति। एकाग्रे बहिर्वृत्तिनिरोधः, निरुद्धे च सर्वासां वृत्तीनां संस्काराणां च प्रविलय इत्यनयोरेव भूम्योर्योगस्य सम्भवः॥ २॥

इदानीं सूत्रकारः चित्तवृत्तिनिरोधपदानि व्याख्यातुकामः प्रथमं चित्तपदं व्याचष्टे—

## तदा द्रष्टुः स्वरूपेऽवस्थानम्॥ ३॥

द्रष्टुः पुरुषस्य तस्मिन् काले स्वरूपे चिन्मात्रतायामवस्थानं स्थितिर्भवति। अयमर्थः,—उत्पन्नविवेकख्यातेः चित्सङ्क्रमाभावात् कर्तृत्वाभिमाननिवृत्तौ प्रोच्छिन्नपरिणामायां बुद्धौ च आत्मनः स्वरूपेणावस्थानं स्थितिर्भवति॥ ३॥

व्युत्थानदशायान्तु तस्य किं रूपम्? इत्याह—

## वृत्तिसारूप्यमितरत्र॥ ४॥

इतरत्र योगादन्यस्मिन् काले, वृत्तयो या वक्ष्यमाणलक्षणाः, ताभिः सारूप्यं तद्रूपत्वम्। अयमर्थः,—यादृश्यो वृत्तयो दुःख-मोह-सुखाद्यात्मिकाः प्रादुर्भवन्ति, तादृग्रूप एव संवेद्यते व्यवहर्तृभिः पुरुषः; तदेवं यस्मिन् एकाग्रतया परिणते चितिशक्तेः स्वस्मिन् स्वरूपे प्रतिष्ठानं भवति, यस्मिंश्च इन्द्रियवृत्तिद्वारेण विषयाकारेण परिणते पुरुषस्तद्रूपाकार एव परिभाव्यते, यथा जलतरङ्गेषु चलत्सु चन्द्रश्चलन्निव प्रतिभासते, तच्चित्तम्॥ ४॥

वृत्तिपदं व्याख्यातुमाह—

**वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः ॥ ५ ॥**

वृत्तयश्चित्तपरिणामविशेषाः। वृत्तिसमुदायलक्षणस्य अवयविनो या अवयवभूता वृत्तयः, तदपेक्षया तय-प्रत्ययः। एतदुक्तं भवति—पञ्चवृत्तयः कीदृश्यः ? क्लिष्टाः क्लेशैर्वक्ष्यमाणलक्षणैराक्रान्ताः क्लिष्टाः। तद्विपरीता अक्लिष्टाः ॥ ५ ॥

एता एव पञ्चवृत्तयः सङ्क्षिप्य उद्दिश्यन्ते—

**प्रमाण-विपर्य्यय-विकल्प-निद्रा-स्मृतयः ॥ ६ ॥**

आसां क्रमेण लक्षणमाह—

**प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥**

अत्र अतिप्रसिद्धत्वात् प्रमाणानां शास्त्रकारेण भेदलक्षणेनैव गतत्वात् लक्षणस्य पृथक् लक्षणं न कृतम्। प्रमाणलक्षणन्तु—अविसंवादि ज्ञानं प्रमाणमिति। इन्द्रियद्वारेण बाह्यवस्तूपरागाच्चित्तस्य तद्विषय-सामान्य-विशेषात्मनोऽर्थस्य विशेषावधारणं प्रधाना वृत्तिः प्रत्यक्षम्। गृहीत-सम्बन्धात् लिङ्गात् लिङ्गिनि सामान्याध्यवसायोऽनुमानम्। आप्तवचनम् आगमः ॥ ७ ॥

एवं प्रमाणरूपां वृत्तिं व्याख्याय विपर्य्ययरूपामाह—

**विपर्य्ययो मिथ्याज्ञानम्, अतद्रूपप्रतिष्ठितम् ॥८॥**

अतथाभूतेऽर्थेऽतथोत्पद्यमानं ज्ञानं विपर्य्ययः। यथा शुक्तिकायां रजतज्ञानम्। अतद्रूपप्रतिष्ठितमिति—तस्यार्थस्य यद्रूपं तस्मिन् रूपे न प्रतिष्ठति, तस्यार्थस्य यत् पारमार्थिकं रूपं न तत् प्रतिभासयतीति यावत्। संशयोऽप्यतद्रूपप्रतिष्ठितत्वान्मिथ्याज्ञानं, यथा स्थाणुर्वा पुरुषो वा इति ॥ ८ ॥

विकल्पवृत्तिं व्याख्यातुमाह—

**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥**

शब्दजनितं ज्ञानं शब्दज्ञानं, तदनुपतितुं शीलं यस्य सः शब्दज्ञानानु-पाती, वस्तुनस्तथात्वमनपेक्षमाणोऽध्यवसायः स विकल्प इत्युच्यते ;

यथा पुरुषस्य चैतन्यं स्वरूपमिति। अत्र देवदत्तस्य कम्बल इति शब्दजनिते ज्ञाने षष्ठ्या योऽध्यवसितो भेदः तमिहाविद्यमानमपि समारोप्य प्रवर्त्ततेऽध्यवसायः। वस्तुतस्तु चैतन्यमेव पुरुषः ॥ ९ ॥

निद्रां व्याख्यातुमाह—

**अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥**

अभावप्रत्यय आलम्बनं यस्याः सा तथोक्ता। एतदुक्तं भवति—या सन्ततम् उद्रिक्तत्वात्तमसः समस्तविषयपरित्यागेन प्रवर्त्तते वृत्तिः सा निद्रा; तस्याश्च "सुखमहमस्वाप्सम्" इति स्मृतिदर्शनात् स्मृतेश्चानुभव-व्यतिरेकेणानुपपत्तेर्वृत्तित्वम् ॥ १० ॥

स्मृतिं व्याख्यातुमाह—

**अनुभूतविषयासम्प्रमोषः स्मृतिः ॥ ११ ॥**

प्रमाणेनानुभूतस्य विषयस्य योऽयमसम्प्रमोषः संस्कारद्वारेण बुद्धा-वारोहः, सा स्मृतिः। तत्र प्रमाण-विपर्य्यय-विकल्पा जाग्रदवस्थाः त एव तदनुभवबलात् प्रत्यक्षायमाणाः स्वप्नाः। निद्रा तु असंवेद्यमानविषया। स्मृतिश्च प्रमाणविकल्पनिद्रानिमित्ता ॥ ११ ॥

एवं वृत्तीर्व्याख्याय सोपायं निरोधं व्याख्यातुमाह—

**अभ्यास-वैराग्याभ्यां तन्निरोधः ॥ १२ ॥**

अभ्यास-वैराग्ये वक्ष्यमाणलक्षणे, ताभ्यां प्रकाश-प्रवृत्ति-नियमरूपा या वृत्तयः, तासां निरोधो भवतीत्युक्तं भवति; तासां विनिवृत्तवाह्याभि-निवेशानाम् अन्तर्मुखतया स्वकारणे एव चित्ते शक्तिरूपतयाऽवस्थानम्। तत्र विषयदोषदर्शनजेन वैराग्येण तद्वैमुख्यमुत्पाद्यते, अभ्यासेन च सुखजनकं शान्तप्रवाहप्रदर्शनद्वारेण दृढस्थैर्य्यमुत्पद्यते; इत्थं ताभ्यां भवति चित्तवृत्तिनिरोधः ॥ १२ ॥

अभ्यासं व्याख्यातुमाह—

**तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥**

वृत्तिरहितस्य चित्तस्य स्वरूपनिष्ठः परिणामः स्थितिः, तस्यां यत्न उत्साहः, पुनः पुनस्तत्त्वेन चेतसि निवेशनमभ्यास इति उच्यते ॥ १३ ॥

तस्यैव विशेषमाह—

**स तु दीर्घकालादरनैरन्तर्य्य-सत्कारासेवितो दृढ़भूमिः ॥ १४ ॥**

बहुकालं नैरन्तर्य्येण आदरातिशयेन च सेव्यमानो दृढ़भूमिः स्थिरो भवति, दार्ढ्याय प्रभवतीत्यर्थः ॥ १४ ॥

वैराग्यस्य लक्षणमाह—

**दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥**

द्विविधो हि विषयो दृष्ट आनुश्रविकश्च। दृष्ट इहैवोपलभ्यमानः शब्दादिः, देवलोकादावानुश्रविकः, अनुश्रूयते गुरुमुखादित्यनुश्रवो वेदः, तत्समधिगत आनुश्रविकः, तयोर्द्वयोरपि विषययोः परिणाम-विरसत्वदर्शनाद्विगतगर्द्धस्य या वशीकारसंज्ञा ममैते वश्या नाहमेतेषां वश्य इति योऽयं विमर्षः, तद्वैराग्यमुच्यते ॥ १५ ॥

तस्यैव विशेषमाह—

**तत् परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥१६॥**

तद्वैराग्यं परं प्रकृष्टं प्रथमं वैराग्यं विषयविषयं, द्वितीयं गुणविषयम् उत्पन्नगुणपुरुषविवेकख्यातेरेव भवति, निरोधसमाधेरत्यन्तानुकूल-त्वात् ॥ १६ ॥

एवं योगस्य स्वरूपमुक्त्वा सम्प्रज्ञातस्वरूपभेदमाह—

**वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः ॥ १७ ॥**

समाधिरिति शेषः। सम्यक् संशयविपर्य्ययरहितत्वेन प्रज्ञायते प्रकर्षेण ज्ञायते भाव्यस्य रूपं येन स सम्प्रज्ञातः, समाधिर्भावनाविशेषः सवि-तर्कादिभेदाच्चतुर्विधः,—सवितर्कः, सविचारः, सानन्दः, सास्मितश्च।

भावना भाव्यस्य विषयान्तरपरिहारेण चेतसि पुनः पुनर्निवेशनम्। भाव्यञ्च द्विविधम्—ईश्वरस्तत्त्वानि च। तान्यपि द्विविधानि जड़ाजड़-भेदात्; जड़ानि चतुर्विंशतिः, अजड़ः पुरुषः। तत्र यदा महाभूतानि इन्द्रियाणि स्थूलानि विषयत्वेनादाय पूर्वापरानुसन्धानेन शब्दार्थोल्लेख-सम्भेदेन भावना क्रियते, तदा सवितर्कः समाधिः। अस्मिन्नेव अवलम्बने पूर्वापरानुसन्धानशब्दोल्लेखशून्यत्वेन यदा भावना प्रवर्त्तते,तदा निर्वितर्कः। तन्मात्रान्तःकरणलक्षणं सूक्ष्मविषयमालम्ब्य तस्य देशकालधर्मावच्छेदेन यदा भावना, तदा सविचारः। तस्मिन्नेव अवलम्बने देशकालधर्माव-च्छेदं विना धर्मिमात्रावभासित्वेन भावना क्रियमाणा निर्विचार इत्युच्यते। एवं-पर्य्यन्तः समाधिः ग्राह्यसमापत्तिरिति व्यपदिश्यते। यदा तु रजस्तमोलेशानुविद्धमन्तःकरणसत्त्वं भाव्यते, तदा गुणभावाच्चितिशक्तेः सुखप्रकाशमयस्य सत्त्वस्य भाव्यमानस्योद्रेकात् सानन्दः समाधिर्भवति। तस्मिन्नेव समाधौ ये बद्धधृतयस्तत्त्वान्तरं प्रधान-पुरुषरूपं न पश्यन्ति, ते विगतदेहाहङ्कारत्वाद्विदेहशब्दवाच्याः। इयं ग्रहणसमापत्तिः। ततः परं रजस्तमोलेशानभिभूतशुद्धसत्त्वमालम्बनीकृत्य या प्रवर्त्तते भावना, तस्यां ग्राह्यस्य सत्त्वस्य न्यग्भावात् चितिशक्तेरुद्रेकात् सत्तामात्रावशेषत्वेन समाधिः सास्मित इत्युच्यते। न चाहङ्कारास्मितयोरभेदः शङ्कनीयः, यतो यत्रान्तःकरणम् अहमिति उल्लेखेन विषयान् वेदयते, सोऽहङ्कारः, यत्रान्तर्मुखतया प्रतिलोमपरिणामे प्रकृतिलीने चेतसि सत्तामात्रम् अव-भाति, सा सास्मिता। अस्मिन्नेव समाधौ ये कृतपरितोषाः परं परमात्मानं पुरुषं न पश्यन्ति, तेषां चेतसि स्वकारणे लयमुपागते प्रकृतिलय इत्युच्यते; ये परं पुरुषं ज्ञात्वा भावनायां प्रवर्त्तन्ते, तेषामियं विवेक-ख्यातिर्ग्रहीतृसमापत्तिरित्युच्यते। तत्र सम्प्रज्ञाते समाधौ चतस्रोऽवस्थाः शक्तिरूपतयाऽवतिष्ठन्ते, तत्रैकैकस्यास्त्यागे उत्तरोत्तरा इति चतुरव-स्थोऽयं सम्प्रज्ञातः समाधिः ॥ १७ ॥

असम्प्रज्ञातमाह—

## विरामप्रत्ययाभ्यासपूर्वः संस्कारविशेषोऽन्यः ॥ १८ ॥

विरम्यतेऽनेनेति विरामो वितर्कादिचिन्तात्यागः; विरामश्चासौ

प्रत्ययश्चेति विरामप्रत्ययः, तस्याभ्यासः पौनःपुन्येन चेतसि निवेशनं, तत्र या काचित् वृत्तिरुल्लसति, तस्या "नेति नेति" नैरन्तर्य्येण पर्य्युदसनं विरामप्रत्ययाभ्यासः, तत्पूर्वः सम्प्रज्ञातसमाधिः। संस्कारविशेषो यः तद्वि-लक्षणः, अयमसम्प्रज्ञात इत्यर्थः; न तत्र किञ्चिद्वेद्यम्। असम्प्रज्ञातो निर्बीजः समाधिः। इह चतुर्विधः चित्तस्य परिणामः,—व्युत्थानं, समाधि-प्रारम्भः, निरोधः, एकाग्रता च। क्षिप्तमूढे चित्तभूमी व्युत्थानम्। विक्षिप्ता भूमिश्च सत्त्वोद्रेकात् समाधिप्रारम्भः। निरुद्धैकाग्रते च पर्य्यन्तभूमी। प्रतिपरिणामञ्च संस्काराः; तत्र व्युत्थानजनिताः संस्काराः समाधि-प्रारम्भजैः संस्कारैः प्रत्याहन्यन्ते, तज्जाश्च एकाग्रताजैः, निरोधजनितै-रेकाग्रताजाः, निरोधजाः संस्काराः स्वरूपञ्च हन्यन्ते; यथा सुवर्ण-संवलितं ध्मायमानं सीसमात्मानं सुवर्णमलञ्च निर्दहति, एवमेकाग्रता-जनितान् संस्कारान् निरोधजाः स्वात्मानञ्च निर्दहन्ति॥ १८॥

तदेवं योगस्य स्वरूपं भेदञ्च सङ्क्षेपेणोपायांश्च अभिधाय विस्तररूपे-णोपायं योगाभ्यासप्रदर्शनपूर्वकमुपक्रमते—

## भवप्रत्ययो विदेहप्रकृतिलयानाम्॥ १९॥

विदेहाः प्रकृतिलयाश्च वितर्कादिभूमिकासूत्रे व्याख्याताः, तेषां समाधिः भवप्रत्ययः, भवः संसारः, स एव प्रत्ययः कारणं यस्य स भवप्रत्ययः। अयमर्थः,—आविर्भावान्तर्भूता एव ते संसारे तथाविधसमाधिभाजो भवन्ति, तेषां परतत्त्वादर्शनात् योगाभासोऽयम्; अतः परतत्त्वज्ञाने तद्भावनायाञ्च मुक्तिकामेन महान् यत्नो विधेय इत्येतदर्थमुपदिष्टम्॥१९॥

तदन्येषान्तु—

## श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्॥२०॥

विदेह-प्रकृतिलयव्यतिरिक्तानां श्रद्धादिपूर्वकः, श्रद्धादयः पूर्वे उपाया यस्य स श्रद्धादिपूर्वकः; ते च श्रद्धादयः क्रमादुपायोपेयभावेन प्रवर्त्त-मानाः सम्प्रज्ञातसमाधेरुपायतां प्रतिपद्यन्ते। तत्र श्रद्धा योगविषये चेतसः प्रसादः। वीर्य्यमुत्साहः। स्मृतिरनुभूतासम्प्रमोषः। समाधि-रेकाग्रता। प्रज्ञा प्रज्ञातव्यविवेकः। तत्र श्रद्धावतो वीर्य्यं जायते, योग-

विषये उत्साहवान् भवति। सोत्साहस्य च पाश्चात्यानुभूतिषु स्मृतिरुत्पद्यते। तत्स्मरणाच्च चेतः समाधीयते। समाहितचित्तश्च भाव्यं सम्यक् विवेकेन जानाति। त एते सम्प्रज्ञातस्य समाधेरुपायाः, तस्याभ्यासात् पराच्च वैराग्यात् भवति असम्प्रज्ञातः॥ २०॥

उक्तोपायवतां योगिनाम् उपायभेदाद्भेदानाह—

## तीव्रसंवेगानामासन्नः॥ २१॥

समाधिलाभः इति शेषः। संवेगः क्रियाहेतुर्दृढतरः संस्कारः, स तीव्रो येषामधिमात्रोपायानां तेषां समाधिलाभः समाधिफलञ्चासन्नं भवति शीघ्रमेव सम्पद्यते इत्यर्थः॥ २१॥

के ते तीव्रसंवेगाः? इत्याह—

## मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः॥ २२॥

तेभ्य उपायेभ्यो मृद्वादिभेदभिन्नेभ्य उपायवतां विशेषो भवति, मृदुर्मध्य अधिमात्र इत्युपायभेदाः, ते प्रत्येकं मृदुसंवेग-मध्यसंवेग-तीव्रसंवेगभेदात् त्रिधा; तद्भेदेन च नव योगिनो भवन्ति, मृदूपायो मृदुसंवेगः मध्यसंवेगः तीव्रसंवेगः। मध्योपायो मृदुसंवेगः मध्यसंवेगः तीव्रसंवेगः। अधिमात्रोपायो मृदुसंवेगः मध्यसंवेगः तीव्रसंवेगः। अधिमात्रे उपाये तीव्रे च संवेगे च महान् यत्नः कर्त्तव्य इति भेदोपदेशः॥ २२॥

इदानीमेतदुपायविलक्षणं सुगममुपायान्तरं दर्शयितुमाह—

## ईश्वरप्रणिधानाद्वा॥ २३॥

ईश्वरो वक्ष्यमाणलक्षणः, तत्र प्रणिधानं भक्तिविशेषः, विशिष्टमुपासनं, सर्वक्रियाणां तत्रार्पणं, विषयसुखादिकं फलमनिच्छन् सर्वाः क्रियाः तस्मिन् परमगुरावर्पयति, तत्प्रणिधानं समाधेस्तत्फललाभस्य च प्रकृष्ट उपायः॥ २३॥

ईश्वरस्य प्रणिधानात् समाधिलाभ इत्युक्तं, तत्रेश्वरस्य स्वरूपं प्रमाणं प्रभावं वाचकम् उपासनाक्रमं तत्फलञ्च क्रमेण वक्तुमाह—

## क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥

क्लिश्नन्तीति क्लेशा अविद्यादयो वक्ष्यमाणाः, विहितनिषिद्धव्यामिश्र-रूपाणि कर्माणि, विपच्यन्ते इति विपाकाः कर्मफलानि, जात्यायु-र्भोगा आ-फलविपाकाच्चित्तभूमौ शेरते इत्याशयो वासनाख्यसंस्कारः, तैरपरामृष्टः त्रिष्वपि कालेषु न संस्पृष्टः, पुरुषविशेषः अन्येभ्यः पुरुषेभ्यो विशिष्यते इति विशेषः, ईश्वर ईशनशीलः, इच्छामात्रेण सकल-जगदुद्धरणक्षमः। यद्यपि सर्वेषामात्मनां क्लेशादिस्पर्शो नास्ति, तथाऽपि चित्तगतास्तेषामुपदिश्यन्ते ; यथा योद्धृगतौ जय-पराजयौ स्वामिनः। अस्य तु त्रिष्वपि कालेषु तथाविधोऽपि क्लेशादिपरामर्शो नास्ति, अतः सविलक्षण एव भगवानीश्वरः। तस्य च तथाविधमैश्वर्य्यमनादेः सत्त्वो-त्कर्षात्, तस्य सत्त्वोत्कर्षस्य प्रकृष्टात् ज्ञानादेव ; न च अनयोर्ज्ञानैश्वर्य्य-योरितरेतराश्रयत्वं, परस्परानपेक्षत्वात्। ते द्वे ज्ञानैश्वर्य्ये ईश्वरसत्त्वे वर्त्तमाने अनादिभूते, तेन तथाविधेन सत्त्वेन तस्यानादिरेव सम्बन्धः ; प्रकृति-पुरुषसंयोग-वियोगयोरीश्वरेच्छाव्यतिरेकेणानुपपत्तेः ; यथेतरेषां प्राणिनां सुख-दुःख-मोहात्मकतया परिणतं चित्तं निर्मले सात्त्विके धर्मानुप्रखे प्रतिसङ्क्रान्तं चिच्छायासङ्क्रान्तः संवेद्यं भवति, नैवमीश्वरस्य ; तस्य केवल एव सात्त्विकः परिणाम उत्कर्षवान् अनादिसम्बन्धेन भोग्यतया व्यवस्थितः, अतः पुरुषान्तरविलक्षणतया स एव ईश्वरः। मुक्तात्मनान्तु पुनः पुनः क्लेशादियोगस्तैः शास्त्रोक्तै-रुपायैर्निवर्त्तितः, अस्य पुनः सर्वदैव तथाविधत्वान्न मुक्तात्मतुल्यत्वं, न चेश्वराणामनेकत्वं, तेषां तुल्यत्वे भिन्नाभिप्रायत्वात् कार्य्यस्यैवानुपपत्तेः ; उत्कर्षापकर्षयुक्तत्वे य एवोत्कृष्टः, स एवेश्वरः, अत्रैव काष्ठाप्राप्तत्वा-दैश्वर्य्यस्य ॥ २४ ॥

एवमीश्वरस्य स्वरूपमभिधाय प्रमाणमाह—

## तत्र निरतिशयं सार्वज्ञबीजम् ॥ २५ ॥

तस्मिन् भगवति सर्वज्ञत्वस्य यद्बीजम् अतीतानागतादिग्रहणस्याल्पत्वं

महत्त्वञ्च मूलत्वाद्बीजमिव बीजं, तत् तत्र निरतिशयं काष्ठां प्राप्तं, दृष्टा ह्यल्पत्व-महत्त्वादीनां धर्माणां सातिशयानां काष्ठाप्राप्तिः ; यथा परमाणावल्पत्वस्य, आकाशे परममहत्त्वस्य, एवं ज्ञानादयोऽपि चित्तधर्माः तारतम्येन परिदृश्यमानाः क्वचिन्निरतिशयतामासादयन्ति, यत्र चैते निरतिशयाः, स ईश्वरः। यद्यपि सामान्यमात्रेऽनुमानमात्रस्य पर्य्यवसितत्वात् न विशेषावगतिः सम्भवति, तथाऽपि शास्त्रादस्य सर्वज्ञत्वादयो विशेषा अवगन्तव्याः। तस्य स्वप्रयोजनाभावे कथं प्रकृति-पुरुषयोः संयोग-वियोगौ आपादयतीति नाशङ्कनीयं, तस्य कारुणिकत्वात् भूतानुग्रह एव प्रयोजनं,कल्पप्रलय-महाप्रलयेषु निःशेषान् संसारिण उद्धरिष्यामीति तस्याध्यवसायः ; यत् यस्येष्टं तत्तस्य प्रयोजनमिति ॥ २५ ॥

एवमीश्वरस्य प्रमाणमभिधाय प्रभावमाह—

**स पूर्वेषामपि गुरुः कालानवच्छेदात् ॥२६॥**

आद्यानां स्रष्टॄणां ब्रह्मादीनामपि स गुरुः उपदेष्टा, यतः स कालेन नावच्छिद्यते, अनादित्वात्। तेषां ब्रह्मादीनां पुराणादिसत्त्वादस्ति कालेनावच्छेदः ॥ २६ ॥

एवं प्रभावमुक्त्वा उपासनोपयोगाय वाचकमाह—

**तस्य वाचकः प्रणवः ॥ २७ ॥**

इत्थमुक्तस्वरूपेश्वरस्य वाचकोऽभिधायकः, प्रकर्षेण नूयते स्तूयतेऽनेनेति नौति स्तौतीति वा प्रणवः ओङ्कारः, तयोश्च वाच्य-वाचकलक्षणः सम्बन्धो नित्यः सङ्केतेन प्रकाश्यते, न तु केनचित् क्रियते ; यथा, पितापुत्रयोः विद्यमान एव सम्बन्धोऽस्यायं पिता, अस्यायं पुत्र इति केनचित् प्रकाश्यते ॥ २७ ॥

उपासनमाह—

**तज्जपस्तदर्थभावनम् ॥ २८ ॥**

तस्य सार्द्धत्रिमात्रिकस्य प्रणवस्य, जपो यथावदुच्चारणं, तद्वाच्यस्य चेश्वरस्य भावनं पुनः पुनश्चेतसि निवेशनमेकाग्रताया उपायः ; अतः समाधिसिद्धये योगिना प्रणवो जप्यः, तदर्थ ईश्वरश्च भावनीय इत्युक्तं भवति ॥ २८ ॥

उपासनायाः फलमाह—

**ततः प्रत्यक्चेतनाऽधिगमोऽप्यन्तरायाभावश्च ॥२९॥**

तस्माज्जपात्तदर्थभावनायाश्च योगिनः प्रत्यक्चेतनाऽधिगमो भवति, विषयप्रातिकूल्येन स्वान्तःकरणाभिमुखमञ्चति या चेतना दृक्शक्तिः सा प्रत्यक्चेतना, तदधिगमो ज्ञानं भवतीत्यर्थः ; अन्तराया वक्ष्यमाणाः, तेषामभावः शक्तिप्रतिबन्धोऽपि भवति ॥ २९ ॥

अथ के अन्तरायाः ? इत्याशङ्कायामाह—

**व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपाः, तेऽन्तरायाः ॥ ३० ॥**

नवैते रजस्तमोबलात् प्रवर्त्तमानाश्चित्तस्य विक्षेपा भवन्ति, तैरेकाग्रताविरोधिभिश्चित्तं विक्षिप्यत इत्यर्थः। तत्र व्याधिर्धातुवैषम्यनिमित्तो ज्वरादिः। स्त्यानमकर्मण्यता चित्तस्य। उभयकोट्यालम्बि ज्ञानं संशयः, योगः साध्यो न वेति। प्रमादोऽनवधानता, समाधिसाधनेष्वौदासीन्यम्। आलस्यं काय-चित्तयोर्गुरुत्वं, योगविषये प्रवृत्त्यभावहेतुः। अविरतिश्चित्तस्य विषयसम्प्रयोगात्मा गर्द्धः। भ्रान्तिदर्शनं शुक्तिकायां रजतवद्विपर्य्ययज्ञानम्। अलब्धभूमिकत्वं कुतश्चिन्निमित्तात् समाधिभूमेरलाभः असम्प्राप्तिः। अनवस्थितत्वं लब्धायामपि भूमौ चित्तस्य तत्राप्रतिष्ठा। त एते समाधेरेकाग्रताया यथायोगं प्रतिपक्षत्वादन्तराया इत्युच्यन्ते ॥ ३० ॥

चित्तविक्षेपकारकानन्यानप्यन्तरायान् प्रतिपादयितुमाह—

**दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥३१॥**

कुतश्चिन्निमित्तादुत्पन्नेषु विक्षेपेषु एते दुःखादयः प्रवर्त्तन्ते। तत्र दुःखं चित्तस्य राजसः परिणामो बाधनालक्षणः, यद्बाधात् प्राणिनः

तदुपघाताय प्रवर्त्तन्ते। दौर्मनस्यं बाह्याभ्यन्तरैः कारणैर्मनसो दौःस्थ्यम्। अङ्गमेजयत्वं सर्वाङ्गीणो वेपथुः, आसनमनःस्थैर्य्यस्य बाधकः। प्राणो यद्बाह्यं वायुमाचामति स श्वासः, यत् कौष्ठ्यं वायुं निःश्वसिति स प्रश्वासः। एते विक्षेपैः सह प्रवर्त्तमाना यथोदिताभ्यास-वैराग्याभ्यां निरोद्धव्या इत्येषामुपदेशः। ३१॥

सोपद्रवविक्षेपप्रतिषेधार्थमुपायान्तरमाह—

**तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः॥ ३२॥**

तेषां विक्षेपाणां प्रतिषेधार्थमेकस्मिन् कस्मिंश्चिदभिमते तत्त्वेऽभ्यास-श्चेतसः पुनः पुनर्निवेशनं कार्य्यं, यद्बलात् प्रत्युदितायामेकाग्रतायां ते विक्षेपाः प्रणाशमुपयान्ति॥ ३२॥

इदानीं चित्तसंस्कारापादकपरिकर्मकथनमुपायान्तरमाह—

**मैत्री-करुणा-मुदितोपेक्षाणां सुख-दुःख-पुण्या-पुण्यविषयाणां भावनातश्चित्तप्रसादनम्॥ ३३॥**

मैत्री सौहार्दम्। करुणा कृपा। मुदिता हर्षः। उपेक्षा औदासीन्यम्। एता यथाक्रमं सुखितेषु दुःखितेषु पुण्यवत्सु अपुण्यवत्सु च विभावयेत्। तथा हि, सुखितेषु साधुषु एषां सुखित्वमिति मैत्रीं कुर्य्यात्, न तु ईर्ष्याम्। दुःखितेषु कथं नु नामैषां दुःखनिवृत्तिः स्यात्? इति कृपामेव कुर्य्यात्, न ताटस्थ्यम्। पुण्यवत्सु पुण्यानुमोदनेन हर्षमेव कुर्य्यात्, न तु किमेते पुण्यवन्त इति विद्वेषम्। अपुण्यवत्सु चौदासीन्यमेव भावयेत्, नानुमोदनं न वा द्वेषम्। सूत्रे सुख-दुःखादि-शब्दैस्तद्वन्तः प्रतिपादिताः। तदेवं मैत्र्यादिपरिकर्मणा चित्ते प्रसीदति सुखेन समाधेराविर्भावो भवति। परिकर्म चैतत् बाह्यं कर्म, यथा गणिते मिश्रकादिव्यवहारो गणितनिष्पत्तये सङ्कलितादिकर्मोप-कारकत्वेन प्रधानकर्मनिष्पत्तये भवति, एवं द्वेष-रागादिप्रतिपक्षभूत-मैत्र्यादिभावनया समुत्पादितप्रसादं चित्तं सम्प्रज्ञातादिसमाधियोग्यं

सम्पद्यते। राग-द्वेषावेव मुख्यतया विक्षेपमुत्पादयतः, तौ चेत् समूल-मुन्मूलितौ स्यातां, तदा प्रसन्नत्वात् मनसो भवत्येकाग्रता ॥ ३३ ॥

उपायान्तरमाह—

## प्रच्छर्दन-विधारणाभ्यां वा प्राणस्य ॥ ३४ ॥

प्रच्छर्दनं यत् कौष्ठस्य वायोः प्रयत्नविशेषान्मात्राप्रमाणेन बहिर्निः-सारणम्। मात्राप्रमाणेनैव प्राणस्य वायोर्बहिर्गतिविच्छेदो विधारणा, सा च द्वाभ्यां प्रकाराभ्यां, बाह्यस्यान्तरापूरणेन, पूरितस्य वा तत्रैव निरोधेन; तदेवं रेचक-पूरक-कुम्भकस्त्रिविधः प्राणायामः चित्तस्य स्थितिमेकाग्रतायां निबध्नाति, सर्वासामिन्द्रियवृत्तीनां प्राणवृत्तिपूर्व-कत्वात्, मनः-प्राणयोश्च स्वव्यापारपरस्परमेकयोगक्षेमत्वात्, जीयमानः प्राणः समस्तेन्द्रियवृत्तिनिरोधद्वारेण चित्तस्यैकाग्रतायां प्रभवति। समस्त-दोषक्षयकारित्वञ्चास्यागमे श्रूयते; दोषकृताश्च सर्वा विक्षेपवृत्तयः; अतो दोषनिर्हरणद्वारेणाप्यस्यैकाग्रतायां सामर्थ्यम् ॥ ३४ ॥

इदानीमुपायान्तरप्रदर्शनोपक्षेपेण सम्प्रज्ञातस्य समाधेः पूर्वाङ्गं कथयति—

## विषयवती वा प्रवृत्तिरुत्पन्ना स्थितिनिबन्धिनी ॥ ३५ ॥

मनस इति वाक्यशेषः। विषयाः गन्ध-रस-रूप-स्पर्श-शब्दाः, ते विद्यन्ते फलत्वेन यस्याः सा विषयवती प्रवृत्तिर्मनसः स्थैर्यं करोति। तथा हि, नासाग्रे चित्तं धारयतो दिव्यगन्धसंविदुपजायते। तादृशस्यैव जिह्वाग्रे रससंवित्, तालुग्रे रूपसंवित्, जिह्वामध्ये स्पर्शसंवित्, जिह्वामूले शब्दसंवित्। तदेवं तत्तदिन्द्रियद्वारेण तस्मिन् तस्मिन् विषये दिव्ये जायमाना संवित् चित्तस्यैकाग्रताया हेतुर्भवति, अस्ति योगस्य फलमिति योगिनः समाश्वासोत्पादनात् ॥ ३५ ॥

एवंविधमेवोपायान्तरमाह—

## विशोका वा ज्योतिष्मती ॥ ३६ ॥

प्रवृत्तिरुत्पन्ना चित्तस्य स्थितिनिबन्धिनीति वाक्यशेषः। ज्योतिः-

शब्देन सात्त्विकः प्रकाशः उच्यते, स प्रशस्तो भूयानतिशयवांश्च विद्यते यस्याः सा ज्योतिष्मती प्रवृत्तिः। विशोका विगतः सुखमयत्वाभ्यासवशाच्छोको रजःपरिणामो यस्याः सा विशोका चेतसः स्थितिनिबन्धिनी। अयमर्थः,—हृत्पद्मसम्पुटमध्ये प्रशान्तकल्लोलक्षीरोदधिप्रख्यं चित्तस्य सत्त्वं भावयतः प्रज्ञाऽऽलोकात् सर्ववृत्तिक्षये चेतसः स्थैर्य्यमुत्पद्यते॥ ३६॥

उपायान्तरप्रदर्शनद्वारेण सम्प्रज्ञातसमाधेर्विषयं दर्शयति—

## वीतरागविषयाद्वा चित्तम्॥ ३७॥

मनसः स्थितिनिबन्धनं भवतीति शेषः। वीतरागः परित्यक्तविषयाभिलाषः, तस्य यत् चित्तं परिहृतक्लेशं तत् आलम्बनीकृतं चेतसः स्थितिहेतुर्भवति॥ ३७॥

एवंविधमुपायान्तरमाह—

## स्वप्न-निद्राज्ञानालम्बनं वा॥ ३८॥

प्रत्यस्तमितबाह्येन्द्रियवृत्तेर्मनोमात्रेणैव यत्र भोक्तृत्वमात्मनः स स्वप्नः, निद्रा पूर्वोक्तलक्षणा, तदालम्बनं स्वप्नालम्बनं निद्रालम्बनं वा ज्ञानमालम्ब्यमानं चेतसः स्थितिं करोति॥ ३८॥

नानारुचित्वात् प्राणिनां यस्मिन् कस्मिंश्चिद्वस्तुनि योगिनः श्रद्धा भवति, तस्य ध्यानेनापीष्टसिद्धिरिति प्रतिपादयितुमाह—

## यथाऽभिमतध्यानाद्वा॥ ३९॥

यथाऽभिप्रेते वस्तुनि बाह्ये चन्द्रादावभ्यन्तरे नाड़ीचक्रादौ वा भाव्यमाने चेतः स्थिरीभवति॥ ३९॥

एवमुपायान् प्रदर्श्य फलदर्शनायाह—

## परमाणु-परममहत्त्वान्तोऽस्य वशीकारः॥४०॥

एभिरुपायैश्चित्तस्य स्थैर्य्यं भावयतो योगिनः सूक्ष्मविषयभावनाद्वारेण परमाण्वन्तो वशीकारः अप्रतिघातरूपो जायते, न क्वचित् परमाण्वन्ते सूक्ष्मे विषये अस्य मनः प्रतिहन्यते इत्यर्थः। एवं स्थूलमा-

काशादिपरममहत्त्वपर्य्यन्तं भावयतो न क्वचिच्चेतसः प्रतिघात उत्पद्यते, सर्व्वत्र स्वातन्त्र्यं भवतीत्यर्थः ॥ ४० ॥

एवमेभिरुपायैश्च संस्कृतस्य चेतसः कीदृग्रूपं भवतीत्याह—

**क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृ-ग्रहण-ग्राह्येषु तत्स्थ-तदञ्जनता समापत्तिः ॥ ४१ ॥**

क्षीणा वृत्तयो यस्य स क्षीणवृत्तिः तस्य ग्रहीतृ-ग्रहण-ग्राह्येषु आत्मेन्द्रिय-विषयेषु तत्स्थ-तदञ्जनता समापत्तिर्भवति। तत्स्थत्वं तत्र एकाग्रता, तदञ्जनत्वं तन्मयत्वं, क्षीणभूते चित्ते विषयस्य भाव्यमानस्यैवोत्कर्षः, तथाविधा समापत्तिः तद्रूपः परिणामो भवतीत्यर्थः। दृष्टान्तमाह, अभिजातस्येव मणेः यथा अभिजातस्य निर्म्मलस्फटिकमणेस्तत्तदुपाधिवशात् तत्तद्रूपापत्तिः, एवं निर्म्मलस्य चित्तस्य तत्तद्भावनीयवस्तूपरागात्तत्तद्रूपापत्तिः। यद्यपि ग्रहीतृ-ग्रहण-ग्राह्येषु इत्युक्तं, तथाऽपि भूमिकाक्रमवशात् ग्राह्य-ग्रहण-ग्रहीतृषु इति बोध्यम्; यतः प्रथमं ग्राह्यनिष्ठ एव समाधिः, ततो ग्रहणनिष्ठः, ततोऽस्मितारूपो ग्रहीतृनिष्ठः, केवलस्य पुरुषस्य ग्रहीतुर्भाव्यत्वासम्भवात्। ततश्च स्थूल-सूक्ष्मग्राह्योपरक्तं चित्तं तत्र समापन्नं भवति, एवं ग्रहणे ग्रहीतरि च समापन्नं बोद्धव्यम् ॥ ४१ ॥

इदानीमुक्ताया एव समापत्तेश्चातुर्व्विध्यमाह—

**शब्दार्थ-ज्ञानविकल्पैः सङ्कीर्णा सवितर्का ॥४२॥**

श्रोत्रेन्द्रियग्राह्यः स्फोटरूपो वा शब्दः, अर्थो जात्यादिः, ज्ञानं सत्त्वप्रधाना बुद्धिवृत्तिः, विकल्प उक्तलक्षणः, तैः सङ्कीर्णा; यस्याम् एते शब्दादयस्त्रयः परस्पराध्यासेन विकल्परूपेण प्रतिभासन्ते गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानम् अनेन आकारेण या सा सवितर्का समापत्तिरुच्यते ॥ ४२ ॥

उक्तलक्षणविपरीतां निर्वितर्कामाह—

**स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥**

शब्दार्थस्मृतिप्रविलये सति प्रत्युदितस्पष्टग्राह्याकारप्रतिभासिततया न्यग्भूतज्ञानांशत्वेन स्वरूपशून्येव निर्वितर्का समापत्तिः ॥ ४३ ॥

भेदान्तरं प्रतिपादयितुमाह—

**एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥**

एतयैव सवितर्कया निर्वितर्कया च समापत्त्या सविचारा निर्विचारा च व्याख्याता; कीदृशी? सूक्ष्मविषया सूक्ष्मः तन्मात्रेन्द्रियादिर्विषयो यस्याः सा तथोक्ता। एतेन पूर्वस्याः स्थूलविषयत्वं प्रतिपादितं भवति। सा हि महाभूतेन्द्रियालम्बना शब्दार्थविषयत्वेन शब्दार्थविकल्पसहितत्वेन देशकालधर्माद्यवच्छिन्नः सूक्ष्मोऽर्थः प्रतिभाति यस्यां सा सविचारा। देशकालधर्मादिरहितो धर्ममात्रतया सूक्ष्मार्थस्तन्मात्रेन्द्रियरूपः प्रतिभाति यस्यां सा निर्विचारा ॥ ४४ ॥

अस्या एव सूक्ष्मविषयायाः किं-पर्य्यन्तः सूक्ष्मविषयः? इत्याह—

**सूक्ष्मविषयत्वञ्चालिङ्गपर्य्यवसानम् ॥ ४५ ॥**

सविचार-निर्विचारयोः समापत्त्योर्यत् सूक्ष्मविषयत्वमुक्तं तदलिङ्गपर्य्यवसानं न क्वचिल्लीयते न वा किञ्चित् लिङ्गति गमयतीत्यलिङ्गं प्रधानं, तत्पर्य्यन्तं सूक्ष्मविषयत्वम्। तथा हि, गुणानां परिणामे चत्वारि पर्वाणि—विशिष्टलिङ्गम्, अविशिष्टलिङ्गं, लिङ्गमात्रम्, अलिङ्गं चेति। विशिष्टलिङ्गं भूतेन्द्रियाणि, अविशिष्टलिङ्गं तन्मात्रान्तःकरणानि, लिङ्गमात्रं बुद्धिः, अलिङ्गं प्रधानमिति नातःपरं सूक्ष्ममस्तीत्युक्तं भवति ॥ ४५ ॥

एतासां समापत्तीनां प्रकृते प्रयोजनमाह—

**ता एव सबीजः समाधिः ॥ ४६ ॥**

ता एव उक्तलक्षणाः समापत्तयः, सबीजः सह बीजेनालम्बनेन वर्त्तते इति सबीजः सम्प्रज्ञातः समाधिरित्युच्यते, सर्वासां सालम्बनत्वात् ॥ ४६ ॥

अथेतरासां समापत्तीनां निर्विचारफलत्वात् निर्विचारायाः फलमाह—

**निर्विचारवैशारद्ये अध्यात्मप्रसादः ॥ ४७ ॥**

निर्विचारत्वं व्याख्यातं, वैशारद्यं नैर्मल्यं, सवितर्कां स्थूलविषयामपेक्ष्य निर्वितर्कायाः प्राधान्यं, ततोऽपि सूक्ष्मविषयायाः सविचारायाः, ततोऽपि निर्विचारायाः, तस्यास्तु निर्विकल्परूपायाः प्रकृष्टाभ्यासवशाद्वैशारद्ये नैर्मल्ये सति अध्यात्मप्रसादः समुपजायते। चित्तं क्लेशवासनारहितं स्थितिप्रवाहयोग्यं भवति, एतदेव चित्तस्य वैशारद्यं यत् स्थितौ दार्ढ्यम् ॥ ४७ ॥

तस्मिन् सति किं भवति? इत्याह—

**ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥**

ऋतं सत्यं बिभर्त्ति कदाचिदपि न विपर्ययेणाच्छाद्यते सा ऋतम्भरा प्रज्ञा तस्मिन् भवतीत्यर्थः। तस्माच्च प्रज्ञाऽऽलोकात् सर्वं यथावत् पश्यन् योगी प्रकृष्टं योगं प्राप्नोति ॥ ४८ ॥

तस्याः प्रज्ञान्तराद्वैलक्षण्यमाह—

**श्रौतानुमान-प्रज्ञाभ्यां सामान्यविषया विशेषार्थत्वात् ॥ ४९ ॥**

श्रौतमागमज्ञानम्, अनुमानमुक्तलक्षणं, ताभ्यां या जायते प्रज्ञा सा सामान्यविषया। न हि शब्द-लिङ्गयोरिन्द्रियवद्विशेषप्रतिपत्तौ सामर्थ्यम्, इयं पुनर्निर्विचारवैशारद्यसमुद्भवा प्रज्ञा ताभ्यां विलक्षणा, विशिष्टविषय-

त्वात्; अस्यां हि प्रज्ञायां सूक्ष्म-व्यवहित-विप्रकृष्टानामपि विशेषः स्फुटेनैव रूपेण भासते; अतस्तस्यामेव योगिना परप्रयत्नः कर्त्तव्य इत्युपदिष्टं भवति ॥ ४९ ॥

अस्याः प्रज्ञायाः फलमाह—

## तज्जसंस्कारोऽन्यसंस्कारविरोधी ॥५०॥

तया प्रज्ञया जनितो यः संस्कारः सोऽन्यान् संस्कारान् व्युत्थानजान् समाधिजांश्च संस्कारान् प्रतिबध्नाति स्वकार्य्यकरणाक्षमान् करोतीत्यर्थः; यतस्तत्त्वरूपतया जनिताः संस्कारा बलवत्त्वादतत्त्वरूपप्रज्ञाजनितान् संस्कारान् बाधितुं शक्नुवन्ति; अतस्तामेव प्रज्ञामभ्यसेदित्युक्तं भवति ॥ ५० ॥

एवं सम्प्रज्ञातसमाधिमभिधाय असम्प्रज्ञातं वक्तुमाह—

## तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥५१॥

तस्यापि सम्प्रज्ञातस्य निरोधे विलये सति सर्वासां चित्तवृत्तीनां कारणे प्रविलयात् न संस्कारमात्रा दृष्टिरुदेति, तस्यां "नेति नेति" केवलं पर्य्युदसनान्निर्बीजः समाधिर्भवति, यस्मिन् सति पुरुषः स्वरूपनिष्ठः शुद्धो भवति ॥ ५१ ॥

तत्राधिकृतस्य योगस्य लक्षणं चित्तवृत्तिनिरोधपदानां व्याख्यानम् अभ्यासवैराग्यलक्षणस्योपायद्वयस्य स्वरूपं भेदञ्चाभिधाय सम्प्रज्ञातासम्प्रज्ञात-भेदेन योगस्य मुख्यामुख्यभेदमुक्त्वा योगाभ्यासप्रदर्शनपूर्वकं विस्तारेणोपायान् प्रदर्श्य सुगमोपायप्रदर्शनपरतया ईश्वरस्य स्वरूप-प्रमाण-प्रभाव-वाचकोपासनानि तत्फलानि च निर्णीय चित्तविक्षेपान् तत्सहभुवश्च दुःखादीन् विस्तारेण च तत्प्रतिषेधोपायानेकतत्त्वाभ्यास-मैत्र्यादि-प्राणायामादीन् सम्प्रज्ञातासम्प्रज्ञातपूर्वाङ्गभूतविषयवती प्रवृत्तिरित्यादीनाख्याय उपसंहारद्वारेण च समापत्तिलक्षणफलसहितां स्वस्वविषयसहितां

चोक्ता सम्प्रज्ञातासम्प्रज्ञातयोरुपसंहारमभिधाय सबीजपूर्वकनिर्बीज-समाधिरभिहित इति व्याकृतो योगपादः। ओं तत् सत्।

इति महाराज-भोजदेवविरचितायां राजमार्त्तण्डाभिधायां पातञ्जल-वृत्तौ समाधि(योग)पादः ॥ १ ॥

---

## अथ साधनपादः।

ते ते दुष्प्रापयोगर्द्धि-सिद्धयो येन दर्शिताः।
उपायाः स जगन्नाथस्त्र्यक्षोऽस्तु प्रार्थितासये ॥

तदेवं प्रथमे पादे समाहितचित्तस्य सोपायं योगम् अभिधाय व्युत्थित-चित्तस्यापि कथमुपायाभ्यासपूर्वको योगः स्वास्थ्यमुपयातीति तत्साधनानु-ष्ठानप्रतिपादनाय क्रियायोगमाह—

**तपः-स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥१॥**

तपः शास्त्रान्तरोपदिष्टं चान्द्रायणादि, स्वाध्यायः प्रणवपूर्वाणां मन्त्राणां जपः, ईश्वरप्रणिधानं सर्वक्रियाणां तस्मिन् परमगुरौ फल-निरपेक्षतया समर्पणम्; एतानि क्रियायोग इत्युच्यते ॥ १ ॥

स किमर्थम्? इत्याह—

**समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥२॥**

क्लेशा वक्ष्यमाणाः, तेषां तनूकरणं स्वकार्य्यकरणप्रतिबन्धः, समाधि-रुक्तलक्षणः, तस्य भावना चेतसि पुनः पुनर्निवेशनं, सा अर्थः प्रयोजनं यस्य स तथोक्तः। एतदुक्तं भवति—एते तपःप्रभृतयोऽभ्यस्यमानाश्चित्तगतान् अविद्यादीन् क्लेशान् शिथिलीकुर्वन्तः समाधेरुपकारकतां भजन्ते; तस्मात् प्रथमं क्रियायोगविधानपरेण योगिना भवितव्यमित्युपदिष्टम् ॥ २ ॥

क्लेशतनूकरणार्थ इत्युक्तं, तत्र के क्लेशाः ? इत्याह—

## अविद्याऽस्मिता-राग-द्वेषाभिनिवेशाः क्लेशाः ॥३॥

अविद्यादयो वक्ष्यमाणलक्षणाः पञ्च, ते बाधनालक्षणं परितापमुपजनयन्तः क्लेशशब्दवाच्या भवन्ति ; ते हि चेतसि प्रवर्त्तमानाः संस्कारलक्षणं गुणपरिणामं द्रढ़यन्ति ॥ ३ ॥

सत्यपि सर्वेषां तुल्यक्लेशत्वे मूलभूतत्वादविद्यायाः प्राधान्यं प्रतिपादयितुमाह—

## अविद्या क्षेत्रमुत्तरेषां प्रसुप्त-तनु-विच्छिन्नोदाराणाम् ॥४॥

अविद्या मोहः, अनात्मन्यात्माभिमान इति यावत्, सा क्षेत्रं प्रसवभूमिः उत्तरेषाम् अस्मितादीनां प्रत्येकं प्रसुप्त-तन्वादिभेदेन चतुर्विधानाम् ; अतो यत्र अविद्या विपर्य्ययज्ञानरूपा शिथिलीभवति, तत्र क्लेशानाम् अस्मितादीनां नोद्भवो दृश्यते, विपर्य्ययज्ञानसद्भावे च तेषामुद्भवदर्शनात् स्थितमेव मूलत्वमविद्यायाः। प्रसुप्त-तनु-विच्छिन्नोदाराणामिति—तत्र ये क्लेशाश्चित्तभूमौ स्थिताः प्रबोधकाभावे स्वकार्य्यं नारभन्ते, ते प्रसुप्ता इत्युच्यते। यथा—बालावस्थायां बालस्य हि वासनारूपाः स्थिताः अपि क्लेशाः प्रबोधकसहकार्य्यभावे नाभिव्यज्यन्ते। तनवो ये स्वस्वप्रतिपक्षभावनया शिथिलीकृतकार्य्यसम्पादनशक्तयो वासनाऽवशेषतया चेतस्यवस्थिताः प्रभूतां सामग्रीमन्तरेण स्वकार्य्यमारब्धुमक्षमाः। यथा—अभ्यासवतो योगिनः। ते विच्छिन्ना ये केनचित् बलवता क्लेशेनाभिभूतशक्तयस्तिष्ठन्ति। यथा—द्वेषावस्थायां रागः, रागावस्थायां वा द्वेषः, न ह्यनयोः परस्परविरुद्धयोर्युगपत् सम्भवोऽस्ति। उदारा ये प्राप्तसहकारिसन्निधयः स्वं स्वं कार्य्यमभिनिर्वर्त्तयन्ति। यथा—सदैव योगपरिपन्थिनः। व्युत्थानदशायाम् एषां प्रत्येकं चतुर्विधानामपि मूलभूतत्वेन स्थिताऽप्यविद्या अन्वयित्वेन प्रतीयते ; न हि क्वचिदपि क्लेशानां विपर्य्ययान्वयनिरपेक्षाणां स्वरूपमुपलभ्यते ; तस्मात् मिथ्याज्ञानरूपायाम् अविद्यायां

सम्यग्ज्ञानेन निवर्त्तितायां दग्धबीजकल्पानाम् एषां न क्वचित् प्ररोहः अस्ति ; अतोऽविद्यानिमित्तत्वमविद्याऽन्वयश्चैतेषां निश्चीयते ; अतः सर्वेऽपि अविद्याव्यपदेशभाजः ; सर्वेषां च क्लेशानां चित्तविक्षेपकारित्वात् योगिना प्रथममेव तदुच्छेदे यत्नः कार्य्य इति ॥ ४ ॥

अविद्यालक्षणमाह—

## अनित्याशुचिदुःखानात्मसु नित्यशुचि-सुखात्मख्यातिरविद्या ॥ ५ ॥

अतस्मिंस्तद्प्रतिभासोऽविद्या इत्यविद्यायाः सामान्यलक्षणं, तस्या एव भेदप्रतिपादनम्—अनित्येषु घटादिषु नित्यत्वाभिमानोऽविद्या इति उच्यते। एवमशुचिषु कायादिषु शुचित्वाभिमानः, दुःखेषु विषयेषु सुखाभिमानः, अनात्मशरीरे आत्माभिमानः। एतेन अपुण्ये पुण्यभ्रमोऽनर्थेऽर्थभ्रमो व्याख्यातः ॥ ५ ॥

अस्मितां लक्षयितुमाह—

## दृग्-दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥

दृक्शक्तिः पुरुषः, दर्शनशक्तिः रजस्तमोभ्यामनभिभूतः सात्त्विकः परिणामोऽन्तःकरणरूपः, अनयोः भोक्तृ-भोग्यत्वेन अजड़-जड़त्वेनात्यन्त-भिन्नरूपयोरेकताऽभिमानोऽस्मिता इति उच्यते। यथा प्रकृतिवता (?) कर्तृभोक्तृत्वरहितेनापि कर्त्ताऽहं भोक्ताऽहमित्यभिमन्यते, सोऽयमस्मिता विपर्य्यासः क्लेशः ॥ ६ ॥

रागस्य लक्षणमाह—

## सुखानुशयी रागः ॥ ७ ॥

सुखमनुशेते इति सुखानुशयी, सुखज्ञस्य सुखानुस्मृतिपूर्वकः सुख-साधनेषु तृष्णारूपो गर्द्धः रागसंज्ञकः क्लेशः ॥ ७ ॥

द्वेषलक्षणमाह—

## दुःखानुशयी द्वेषः ॥ ८ ॥

दुःखमुक्तलक्षणं, तदभिज्ञस्य तदनुस्मृतिपूर्वकं तत्साधनेषु अनभि-लषतो योऽयं निन्दात्मकः क्रोधः स द्वेषलक्षणः क्लेशः ॥ ८ ॥

अभिनिवेशस्य लक्षणमाह—

**स्वरसवाही विदुषोऽपि तथा रूढ़ोऽभिनिवेशः ॥९॥**

पूर्वजन्मानुभूतमरणदुःखानुभववासनाबलाद्भयरूपः समुपजायमानः शरीरविषयादिभिर्मम वियोगो मा भूदिति अन्वहमनुबन्धरूपः सर्वस्यैव आ-क्रिमेर्ब्रह्मपर्य्यन्तं निमित्तमन्तरेण प्रवर्त्तमानोऽभिनिवेशाख्यः क्लेशः ॥९॥

तदेवं व्युत्थानस्य क्लेशात्मकत्वादेकाग्रताऽभ्यासकामेन प्रथमं क्लेशाः परिहर्त्तव्याः; न चाज्ञातानां तेषां परिहारः कर्त्तुं शक्य इति तज्ज्ञानाय तेषाम् उद्देश्यं लक्षणं चेतं विभागञ्चाभिधाय स्थूल-सूक्ष्मभेद-भिन्नानां तेषां प्रहाणोपायविभागमाह—

**ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥**

ते सूक्ष्माः क्लेशाः, ये वासनारूपेणैव स्थिताः स्ववृत्तिरूपं परिणाम-मारभन्ते, ते प्रतिप्रसवेन प्रतिलोमपरिणामेन हेयास्त्यक्तव्याः; स्वकारणेऽस्मितायां कृतार्थं सवासनं चित्तं यदा प्रविष्टं भवति, तदा कुतस्तेषां निर्मूलानां सम्भवः ? ॥ १० ॥

स्थूलानां हानोपायमाह—

**ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥**

तेषां क्लेशानामारब्धकार्य्याणां याः सुख-दुःख-मोहात्मिका वृत्तयः, ता ध्यानहेया ध्यानेन चित्तैकाग्रतालक्षणेन हातव्या इत्यर्थः। चित्तपरि-कर्माभ्यासमात्रेणैव स्थूलत्वात्तासां निवृत्तिर्भवति ; यथा—वस्त्रादौ स्थूलो मलः प्रक्षालनमात्रेणैव निवर्त्तते, यस्तु सूक्ष्मांशः स तैस्तैरुपायैरनल-प्रभृतिभिरेव निवर्त्तयितुं शक्यते ॥ ११ ॥

एवं क्लेशानां तत्त्वमभिधाय कर्माशयस्य तदभिधातुमाह—

**क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥१२॥**

कर्माशय इत्यनेन स्वरूपं तस्याभिहितम् ; अतो वासनारूपाण्येव कर्माणि क्लेशमूलः इत्यनेन कारणमभिहितं, यतः कर्मणां शुभाशुभानां क्लेशा एव निमित्तम्। दृष्टादृष्टजन्मवेदनीय इत्यनेन फलमुक्तम्, अस्मिन्नेव जन्मनि अनुभवनीयो दृष्टजन्मवेदनीयः ; जन्मान्तरानुभवनीयः अदृष्ट-

जन्मवेदनीयः ; तथा हि, कानिचित् पुण्यानि देवताऽऽराधनादीनि तीव्रसंवेगेन कृतानि इहैव जन्मनि जात्यायुर्भोगलक्षणं फलं प्रयच्छन्ति। यथा—नन्दीश्वरस्य भगवन्महेश्वराराधनबलादिहैव जन्मनि जात्यादयो विशिष्टाः प्रादुर्भूताः। एवमन्येषां विश्वामित्रादीनां तपःप्रभावात् जात्यायुषी। केषाञ्चिज्जातिरेव ; तथा तीव्रसंवेगेन दुष्टकर्मकृतां नहुषादीनां जात्यन्तरादिपरिणामः ; उर्वश्याश्च कार्त्तिकेयवने लतारूपतया ; एवं व्यस्त-समस्तत्वेन यथायोग्यं योज्यमिति ॥ १२ ॥

इदानीं कर्माशयस्य स्वभेदभिन्नस्य स्वभेदभिन्नं फलमाह—

**सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥**

मूलमुक्तलक्षणाः क्लेशाः, तेष्वनभिभूतेषु सत्सु कर्मणां कुशलाकुशलरूपाणां विपाकः फलं जात्यायुर्भोगा भवन्ति। जातिर्मनुष्यादिः, आयुश्चिरकालम् एकशरीरसम्बन्धः, भोगा विषया इन्द्रियाणि सुखसंवित् दुःखसंवित्। सुख-दुःखादीनि कर्मकरणभावबोधनव्युत्पत्त्या भोगशब्दस्य इतरत्र तात्पर्य्यम् ; चित्तभूमौ अनादिकालसञ्चिताः कर्मवासना यथा यथा पाकमुपयान्ति, तथा तथा गुणप्रधानभावेन स्थिता जात्यायुर्भोगलक्षणं स्वकार्य्यमारभन्ते ॥ १३ ॥

उक्तानां कर्मफलत्वेन जात्यादीनां स्वकारणकर्मानुसारिणां कार्य्यकर्तृत्वमाह—

**ते ह्लाद-परितापफलाः पुण्यापुण्यहेतुत्वात् ॥१४॥**

ह्लादः सुखं, परितापो दुःखं, तौ फलं येषां ते तथोक्ताः, पुण्यं कुशलं कर्म, तद्विपरीतमपुण्यं, ते कर्मणी कारणं येषां तेषां भावस्तस्मात्। एतदुक्तं भवति—पुण्यकर्मारब्धा जात्यायुर्भोगा ह्लादफलाः, अपुण्यकर्मारब्धास्तु परितापफलाः, एतच्च प्राणिमात्रापेक्षतया द्वैविध्यम् ॥ १४ ॥

योगिनस्तत् सर्वं दुःखमित्याह—

**परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥ १५ ॥**

विवेकिनः परिज्ञातक्लेशादिविवेकस्य दृश्यमात्रं सकलमेव भोगसाधनं

सविषं स्वादन्नमिव दुःखमेव प्रतिकूलवेदनीयमेवेत्यर्थः ; यस्मादत्यन्ताभिजात्यो योगी दुःखलेशेनाप्युद्विजते ; यथा—अक्षिपत्रमूर्णातन्तुस्पर्शमात्रेणैव महतीं पीड़ामनुभवति, नेतरदङ्गं, तथा विवेकी स्वल्पदुःखानुबन्धेनापि उद्विजते। कथम् ? इत्याह—परिणाम-ताप-संस्कारदुःखैर्विषयाणामुपभुज्यमानानां यथायथं गर्द्धाविच्छेदप्राप्तिक्रतस्य सुख-दुःखस्य अपरिहार्य्यतया दुःखान्तरसाधनत्वात् नास्त्येव सुखरूपतेति परिणामदुःखत्वम्। उपभुज्यमानेषु सुखसाधनेषु तत्प्रतिपन्थिनं प्रति द्वेषस्य सर्वदैवावस्थितत्वात् सुखानुभवकालेऽपि तापदुःखं दुष्परिहरमिति तापदुःखता। संस्कारदुःखन्तु अभिमतानभिमतविषयसन्निधाने सुखसंवित् दुःखसंविच्चोपजायमाना तथाविधमेव स्वक्षेत्रे संस्कारमारभते, संस्काराच्च पुनस्तथाविधसंविदनुभव इत्यपरिमितसंस्कार उत्पत्तिद्वारेण सर्वस्यैव दुःखानुवेधाद्दुःखत्वम्। एवमुक्तं भवति—क्लेशकर्माशयविपाकसंस्कारानुच्छेदात् सर्वस्यैव दुःखत्वम्। गुणवृत्तिविरोधाच्चेति—गुणानां सत्त्वरजस्तमसां या वृत्तयः सुख-दुःख-मोहरूपाः परस्परमभिभाव्याभिभावकत्वेन विरुद्धा जायन्ते, तासां सर्वत्रैव दुःखानुवेधाद्दुःखत्वम्। एवमुक्तं भवति—ऐकान्तिकीमात्यन्तिकीञ्च दुःखनिवृत्तिमिच्छतो विवेकिन उक्तरूपकारणचतुष्टयात् सर्वे विषया दुःखरूपतया प्रतिभान्ति ; तस्माच्च सर्वकर्मविपाको दुःखरूप एवेत्युक्तं भवति ॥ १५ ॥

तदेवमुक्तस्य क्लेशकर्माशयविपाकराशेरविद्याप्रभवत्वात् अविद्यायाश्च मिथ्याज्ञानरूपतया सम्यग्ज्ञानोच्छेद्यत्वात् सम्यग्ज्ञानस्य च ससाधनहेयोपादेयावधारणरूपत्वात् तदभिधानमाह—

## हेयं दुःखमनागतम् ॥ १६ ॥

भूतस्यातिक्रान्तत्वात्, अनुभूयमानस्य त्यक्तुमशक्यत्वादनागतमेव संसारदुःखं हातव्यमित्युक्तं भवति ॥ १६ ॥

हेयहेतुमाह—

## द्रष्टृ-दृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥

द्रष्टा चिद्रूपः पुरुषः, दृश्यं बुद्धिसत्त्वं, तयोरविवेकख्यातिपूर्वको योऽसौ

संयोगो भोक्तृ-भोग्यत्वेन सन्निधानं, हेयस्य दुःखस्य गुणपरिणामरूपस्य संसारस्य हेतुः कारणं, तन्निवृत्त्या संसारनिवृत्तिर्भवति इत्यर्थः ॥ १७ ॥

द्रष्टृ-दृश्ययोः संयोग इत्युक्तं, तत्र दृश्यस्य स्वरूपं कार्य्यं प्रयोजनञ्चाह—

**प्रकाश क्रिया-स्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥**

प्रकाशः सत्त्वस्य धर्मः, क्रिया प्रवृत्तिरूपा रजसः, स्थितिर्नियमरूपा तमसः, ताः प्रकाश-क्रिया-स्थितयः शीलं स्वाभाविकं रूपं यस्य तत्तथाविधमिति स्वरूपमस्य निर्दिष्टं, भूतेन्द्रियात्मकमिति—भूतानि स्थूलसूक्ष्मभेदेन पृथिव्यादीनि गन्धतन्मात्रादीनि च द्विविधानि, इन्द्रियाणि बुद्धीन्द्रिय-कर्मेन्द्रियान्तःकरणभेदेन त्रिविधानि, उभयमेतत् ग्राह्य-ग्रहणरूपम्, आत्मा स्वरूपाभिन्नः परिणामो यस्य तत्तथाविधमित्यनेनास्य कार्य्यमुक्तं, भोगः कथितलक्षणः, अपवर्गो विवेकख्यातिपूर्विका संसारनिवृत्तिः, तौ भोगापवर्गौ अर्थः प्रयोजनं यस्य तत्तथाविधं दृश्यमित्यर्थः ॥ १८ ॥

तस्य दृश्यस्य नानाऽवस्थारूपपरिणामात्मकस्य हेयत्वेन ज्ञातव्यत्वात् तदवस्थाः कथयितुमाह—

**विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥**

गुणानां पर्वाण्यवस्थाविशेषाश्चत्वारो ज्ञातव्या इत्युपदिष्टं भवति ; तत्र विशेषा महाभूतेन्द्रियाणि, अविशेषास्तन्मात्रान्तःकरणानि, लिङ्गमात्रं बुद्धिः, अलिङ्गमव्यक्तमित्युक्तं, सर्वत्र त्रिगुणरूपस्याव्यक्तस्यान्वयित्वेन प्रत्यभिज्ञानादवश्यं ज्ञातव्यत्वेन योगकाले चत्वारि पर्वाणि निर्दिष्टानि ॥ १९ ॥

एवं हेयत्वेन प्रथमं दृश्यस्य ज्ञातव्यत्वेन तदवस्थासहितं व्याख्याय उपादेयं द्रष्टारं वक्तुमाह—

**द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥**

द्रष्टा पुरुषः, दृशिमात्रश्चेतनामात्रं, मात्रग्रहणं धर्मधर्मिनिरासार्थम् ; केचिद्धि चेतनामात्मनो धर्ममिच्छन्ति ; स शुद्धोऽपि परिणामित्वाद्य-

भावेन सुप्रतिष्ठोऽपि, प्रत्ययानुपश्यः प्रत्यया विषयोपरक्तानि विज्ञानानि, तानि तु अव्यवधानेन प्रतिसङ्क्रमाद्यभावेन पश्यति। एतदुक्तं भवति—जातविषयोपरागायामेव बुद्धौ सन्निधिमात्रेणैव पुरुषस्य द्रष्टृत्वमिति ॥२०॥

स एव भोक्तेत्याह—

**तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥**

दृश्यस्य प्रागुक्तलक्षणस्य य आत्मा यत् स्वरूपं तदर्थ एव; तस्य पुरुषार्थभोक्तृत्वसम्पादनं नाम स्वार्थपरिहारेण प्रयोजनं, न हि प्रधानं प्रवर्त्तमानम् आत्मनः किञ्चित् प्रयोजनमपेक्ष्य प्रवर्त्तते, किन्तु पुरुषस्य भोक्तृत्वं सम्पादयितुमिति। "भोगं सम्पादयामि" इति क्वचित् पाठः ॥ २१ ॥

यद्येवं पुरुषस्य भोगसम्पादनमेव प्रयोजनं, तदा सम्पादिते तस्मिन् तत् निष्प्रयोजनं विरतव्यापारं स्यात्, तस्मिंश्च परिणामशून्ये शुद्धत्वात् सर्वे द्रष्टारो बन्धरहिताः स्युः, ततश्च संसारोच्छेद इत्याशङ्क्याह—

**कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥२२॥**

यद्यपि विवेकख्यातिपर्य्यन्तात् भोगसम्पादनात् कमपि कृतार्थं पुरुषं प्रति तन्नष्टं विरतव्यापारं, तथाऽपि सर्वपुरुषसाधारणत्वात् अन्यान् प्रति अनष्टव्यापारमवतिष्ठते, ततः प्रधानस्य सकलभोक्तृसाधारणत्वात् न कदाचिदपि विनाशः, एकस्य मुक्तौ वा न सर्वमुक्तिप्रसङ्ग इत्युक्तं भवति ॥ २२ ॥

दृश्य-द्रष्टारौ व्याख्याय संयोगं व्याख्यातुमाह—

**स्व-स्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥२३॥**

कार्य्यद्वारेण अस्य लक्षणं करोति। स्वशक्तिर्दृश्यस्य स्वभावः, स्वामिशक्तिर्द्रष्टुः स्वरूपं, तयोर्द्वयोरपि संवेद्य-संवेदकत्वेन व्यवस्थितयोर्या स्वरूपोपलब्धिस्तस्याः कारणं यः स संयोगः; स च सहजो भोग्य-भोक्तृभावस्वरूपानन्यः, न हि तयोर्नित्ययोर्व्यापकयोः स्वरूपादतिरिक्तः कश्चित् संयोगः, यदेव भोग्यस्य भोग्यत्वं भोक्तुश्च भोक्तृत्वमनादिसिद्धं स एव संयोगः ॥ २३ ॥

तस्यापि कारणमाह—

**तस्य हेतुरविद्या ॥ २४ ॥**

या पूर्वं विपर्य्यासात्मिका मोहरूपाऽविद्या व्याख्याता, सा तस्य विवेकाख्यातिरूपस्य संयोगस्य कारणं हेयं हानक्रिया कर्मोच्यते ॥ २४ ॥

किं पुनस्तज्ज्ञानम् ? इत्याह—

**तदभावे संयोगाभावो हानं तद्दृशेः कैवल्यम् ॥२५॥**

तस्या अविद्यायाः स्वरूपविरुद्धेन सम्यग्ज्ञानेन उन्मूलिताया योऽयमभावस्तस्मिन् सति तत्कार्य्यस्य संयोगस्याप्यभावः,तत् हानमित्युच्यते ; अयमर्थः,—नैतस्य अमूर्त्तवस्तुनः विभागो युज्यते, किन्तु जातायां विवेकख्यातौ अविवेकनिमित्तः संयोगः स्वयमेव निवर्त्तते इति तस्य हानं, यदेव च संयोगस्य हानं तदेव नित्यं केवलस्यापि पुरुषस्य कैवल्यं व्यपदिश्यते,तदेवं दृश्यसंयोगस्य च स्वरूपं कारणं कार्य्यञ्चाभिहितम् ॥ २५ ॥

अथ हानोपायकथनद्वारेण उपादेयकारणमाह—

**विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥**

अन्ये गुणाः, अन्यः पुरुष इत्येवंविधस्य विवेकस्य या ख्यातिः साऽस्य हानस्य दृश्यदुःखपरित्यागस्योपायः कारणं, कीदृशी ? अविप्लवा—न विद्यते विप्लवो विच्छेदान्तराऽन्तराऽव्युत्थानरूपो यस्याः स अविप्लवा। इदमत्र तात्पर्य्यं—प्रतिपक्षभावनाबलादविद्याप्रलये निवृत्तकर्त्तृत्व-भोक्तृत्वाभिमानाया रजस्तमोमलानभिभूताया बुद्धेरन्तर्मुखा या चिच्छाया-सङ्क्रान्तिः सा विवेकख्यातिरुच्यते ; तस्याः सन्ततत्वेन प्रवृत्तायां सत्यां दृश्यस्याधिकारनिवृत्तेर्भवत्येव कैवल्यम् ॥ २६ ॥

उत्पन्नविवेकख्यातेः पुरुषस्य यादृशी प्रज्ञा भवति तां कथयन् विवेकख्यातेरेव स्वरूपमाह—

**तस्य सप्तधा प्रान्तभूमिप्रज्ञा ॥ २७ ॥**

तस्योत्पन्नविवेकज्ञानस्य, ज्ञातव्य-विवेकरूपा प्रज्ञा प्रान्तभूमौ सकलसालम्बनसमाधिपर्य्यन्तं सप्तप्रकारा भवन्तीत्यर्थः। तत्र कार्य्यविमुक्ति-

रूपाश्चतुःप्रकाराः,—ज्ञातं मया ज्ञेयं न ज्ञातव्यं किञ्चिदस्ति, क्षीणा मे क्लेशा न किञ्चित् क्षेतव्यमस्ति, अधिगतं मया ज्ञानं, प्राप्ता मया विवेकख्यातिरिति प्रत्ययान्तरपरिहारेण तस्यामवस्थायाम् ईदृश्येव प्रज्ञा जायते, ईदृशी प्रज्ञा कार्य्यविषयं निर्मलं ज्ञानं, कार्य्यविमुक्तिरित्युच्यते। चित्तविमुक्तिस्त्रिधा—चरितार्था मे बुद्धिः, गुणा हृताधिकारा गिरिशिखरनिपतिता इव ग्रावा न पुनः स्थितिं यास्यन्ति स्वकारणे, प्रविलयाभिमुखानां गुणानां मोहाभिधानमूलकारणाभावात् निष्प्रयोजनत्वाच्चामीषां कुतः प्ररोहो भवेत्? स्वात्मीभूतश्च मे समाधिः,तस्मिन् सति स्वरूपप्रतिष्ठोऽहमिति ईदृशी प्रकारा चित्तविमुक्तिः। तदेवमीदृश्यां सप्तविधभूमिप्रज्ञायामुपजातायां पुरुषः केवल इत्युच्यते ॥ २७ ॥

विवेकख्यातिः संयोगाभावहेतुरित्युक्तं, तस्यास्तु उत्पत्तौ किं निमित्तम्? इत्याह—

## योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्ति-रा-विवेकख्यातेः ॥ २८ ॥

योगाङ्गानि वक्ष्यमाणानि, तेषामनुष्ठानात् ज्ञानपूर्वकाभ्यासात् आविवेकख्यातेरशुद्धिक्षये चित्तसत्त्वस्य प्रकाशावरणरूपक्लेशात्मकाशुद्धिक्षये या ज्ञानदीप्तिः, तारतम्येन सात्त्विकः परिणामो विवेकख्यातिपर्य्यन्तस्तस्याः ख्यातिर्हेतुरित्यर्थः ॥ २८ ॥

योगाङ्गानामनुष्ठानादशुद्धिक्षये इत्युक्तं, कानि पुनस्तानि योगाङ्गानि? इति तेषामुद्देशमाह—

## यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टावङ्गानि ॥ २९ ॥

इह कानिचित् समाधेः साक्षादुपकारकाणि, यथा धारणादीनि; कानिचित् प्रतिपक्षभूतहिंसादिवितर्कोन्मूलनद्वारेण समाधिमुपकुर्वन्ति, यथा यमादयः; तत्र आसनादीनामुत्तरोत्तरमुपकारकत्वं, तत् यथा—सत्यासनजये प्राणायामस्थैर्य्यम्; एवमुत्तरत्रापि योज्यम् ॥ २९ ॥

क्रमेणैषां स्वरूपमाह—

**अहिंसा-सत्यास्तेय-ब्रह्मचर्य्यापरिग्रहा यमाः ॥३०॥**

तत्र प्राणवियोगप्रयोजनं व्यापारो हिंसा, सा च सर्वानर्थहेतुः, तदभावोऽहिंसा। हिंसायाः सर्वप्रकारेणैव परिहार्य्यत्वात् प्रथमं तदभावरूपाया अहिंसाया निर्देशः। सत्यं वाङ्मनसोर्यथार्थत्वम्। स्तेयं परस्वापहरणं, तदभावोऽस्तेयम्। ब्रह्मचर्य्यमुपस्थनियमः। अपरिग्रहो भोगसाधनानामनङ्गीकारः। ते एतेऽहिंसादयः पञ्च यमशब्दवाच्या योगाङ्गत्वेन निर्दिष्टाः॥ ३०॥

एषां विशेषमाह—

**एते तु जाति-देश-काल-समयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥**

जातिर्ब्राह्मणत्वादिः, देशस्तीर्थादिः, कालश्चतुर्दश्यादिः, समयो ब्राह्मणप्रयोजनादिः, एतैश्चतुर्भिरनवच्छिन्नाः पूर्वोक्ता अहिंसादयो यमाः सर्वासु क्षिप्तादिषु चित्तभूमिषु भवा महाव्रतमित्युच्यते; तद्यथा—ब्राह्मणं न हनिष्यामि, तीर्थे न कञ्चन हनिष्यामि, चतुर्दश्यां न हनिष्यामि, देवब्राह्मणप्रयोजनव्यतिरेकेण कमपि न हनिष्यामि इत्येवं चतुर्विधावच्छेदव्यतिरेकेण किञ्चित् क्वचित् कदाचित् कस्मिंश्चिदर्थे न हनिष्यामीत्यनवच्छिन्नाः। एवं सत्यादिषु यथायोगं योज्यम्; इत्थमनियतीकृताः सामान्येनैव प्रवृत्तं महाव्रतमित्युच्यते, न पुनः परकीयपरिच्छिन्नावधारणम् ॥ ३१ ॥

नियमानाह—

**शौच-सन्तोष-तपः-स्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ३२ ॥**

शौचं द्विविधं—वाह्यमाभ्यन्तरञ्च; वाह्यं मृज्जलादिभिः कायादिप्रक्षालनम्, आभ्यन्तरं मैत्र्यादिभिश्चित्तमलानां प्रक्षालनम्। सन्तोष-

स्तुष्टिः । शेषाः प्रागेव कृतव्याख्यानाः । एते शौचादयो नियमशब्द-वाच्याः ॥ ३२ ॥

कथमेषां योगाङ्गत्वम् ? इत्याह—

**वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥**

वितर्क्यन्ते इति वितर्का योगपरिपन्थिनो हिंसादयः, तेषां प्रतिपक्ष-भावने सति यदा बाधा भवति, तदा योगः सुकरो भवतीति भवत्येव यम-नियमयोर्योगाङ्गत्वम् ॥ ३३ ॥

इदानीं वितर्काणां स्वरूपं भेदप्रकारं फलञ्च क्रमेणाह—

**वितर्का हिंसादयः कृत-कारितानुमोदिता लोभ-क्रोध-मोहपूर्विका मृदु-मध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥ ३४ ॥**

एते पूर्वोक्ता हिंसादयः प्रथमं त्रिधा भिद्यन्ते, कृत-कारितानुमोदन-भेदेन ; तत्र स्वयं निष्पादिताः कृताः ; "कुरु कुरु" इति प्रयोजक-व्यापारेण समुत्पादिताः कारिताः ; अन्येन क्रियमाणाः साध्वङ्गीकृता अनुमोदिताः । एतच्च त्रैविध्यं परस्परं व्यामोहनिराकरणावधारणा-योच्यते, अन्यथा मन्दमतिरेवं मन्यते—मया त्वियं न कृतेति नास्ति मे दोषः । एतेषां कारणप्रतिपादनाय लोभ-क्रोध-मोहा इति—यद्यपि लोभः प्रथमं निर्दिष्टः, तथाऽपि सर्वक्लेशानां मोहस्य अनात्मनि आत्माभि-मानलक्षणस्य निदानत्वात्, तस्मिन् सति स्व-परविभागपूर्वकत्वेन लोभक्रोधादीनामुद्भवात् मूलत्वमवसेयं, मोहपूर्विका दोषजातिः इत्यर्थः । लोभस्तृष्णा, क्रोधः कृत्याकृत्यविवेकोन्मूलकः प्रज्वलनात्मक-श्चित्तधर्मः । प्रत्येकं कृतादिभेदेन त्रिप्रकारा अपि हिंसादयो मोहादि-कारणत्वेन त्रिधा भिद्यन्ते । एषामेव पुनरवस्थाभेदेन त्रैविध्यमाह, मृदु-मध्याधिमात्राः,—मृदवो मन्दाः, न तीव्रा नापि मन्दा मध्याः, अधिमात्रास्तीव्राः । पाश्चात्या नवभेदा इत्थं त्रैविध्ये सति सप्तविंशति-र्भवति । मृद्वादीनामपि प्रत्येकं मृदु-मध्याधिमात्रभेदात् त्रैविध्यं सम्भवति, तत् यथायोगं योज्यम् । तत् यथा—मृदुमृदुः, मृदुमध्यः, मृदुतीव्र

इति। एषां फलमाह—दुःखाज्ञानानन्तफलाः दुःखं प्रतिकूलतयाऽवभासमानो राजसश्चित्तधर्मः। अज्ञानं मिथ्याज्ञानं संशय-विपर्य्ययरूपं, ते दुःखाज्ञाने अनन्तमपरिच्छिन्नं फलं येषां तथोक्ताः। इत्थं तेषां स्वरूपकारणादिभेदेन ज्ञातानां प्रतिपक्षभावनया योगिना परिहारः कर्त्तव्य इत्युपदिष्टं भवति॥ ३४॥

एषाम् अभ्यासवशात् प्रकर्षमागच्छताम् अनुनिष्पादिन्यः सिद्धयो यथा भवन्ति तथा क्रमेण प्रतिपादयितुमाह—

**अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः॥ ३५॥**

तस्य अहिंसां भावयतः, सन्निधौ सहजविरोधिनामप्यहि-नकुलादीनां वैरत्यागः निर्मत्सरतयाऽवस्थानं भवति, हिंस्रस्वभावा अपि हिंसां त्यजन्तीत्यर्थः॥ ३५॥

सत्याभ्यासवतः किं भवति? इत्याह—

**सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्॥ ३६॥**

क्रियमाणा हि क्रिया यागादिकाः फलं स्वर्गादिकं प्रयच्छन्ति। तस्य तु सत्याभ्यासवतो योगिनस्तथा सत्यं प्रकृष्यते, यथा स क्रियायामकृतायामपि योगी फलमाप्नोति, तद्वचनात् यस्य कस्यचित् क्रियामकुर्वतोऽपि फलं स्वर्गादिकं प्रयच्छन्त्यो भवन्तीत्यर्थः॥ ३६॥

अस्तेयाभ्यासवतः फलमाह—

**अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्॥ ३७॥**

अस्तेयं यदा अभ्यस्यति, तदा अस्य तत्प्रकर्षान्निरभिलाषस्यापि सर्वतो दिव्यानि रत्नानि उपतिष्ठन्ते॥ ३७॥

ब्रह्मचर्य्याभ्यासस्य फलमाह—

**ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः॥ ३८॥**

यः किल ब्रह्मचर्य्यमभ्यस्यति, तस्य तत्प्रकर्षान्निरतिशयं वीर्य्यं सामर्थ्यमाविर्भवति; वीर्य्यनिरोधे हि ब्रह्मचर्य्यस्य प्रकर्षाच्छरीरेन्द्रियमनस्सुवीर्य्यं प्रकर्षमागच्छति॥ ३८॥

अपरिग्रहस्य फलमाह—

## अपरिग्रहस्थैर्य्ये जन्मकथन्तासम्बोधः ॥ ३९ ॥

कथमित्यस्य भावः कथन्ता, जन्मनः कथन्ता जन्मकथन्ता, तस्याः सम्बोधः सम्यग्ज्ञानं,जन्मान्तरे कोऽहमासम्? कीदृशः? किं-कार्य्यकारी? इति जिज्ञासायां सर्वमेव सम्यक् जानातीत्यर्थः। न केवलं भोगसाधन-परिग्रह एव परिग्रहः, यावदात्मनः शरीरपरिग्रहोऽपि परिग्रहः, भोगसाधनत्वाच्छरीरस्य; तस्मिन् सति रागानुबन्धात् बहिर्मुखायामेव प्रवृत्तौ न तात्त्विकज्ञानप्रादुर्भावः। यदा पुनः शरीरादिपरिग्रहनैर-पेक्ष्येण माध्यस्थ्यमवलम्बते, तदा मध्यस्थस्य रागादित्यागात्मको ज्ञान-हेतुर्भवत्येव पूर्वापरजन्मसम्बोधः ॥ ३९ ॥

उक्ता यमानां सिद्धयः; अथ नियमानाह—

## शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ॥४०॥

यः शौचं भावयति, तस्य स्वाङ्गेष्वपि कारणस्वरूपपर्य्यालोचनद्वारेण जुगुप्सा घृणा समुपजायते; अशुचिरयं कायः, नात्राग्रहः कार्य्य इति; अमुनैव हेतुना परैरन्यैश्च कायवद्भिः असंसर्गः सम्पर्काभावः, परिवर्जन-मित्यर्थः; यः किल स्वमेव कायं जुगुप्सते तत्तदवद्यदर्शनात्, स कथं परकीयैस्तथाभूतैश्च कायैः संसर्गमनुभवति? ॥ ४० ॥

शौचफलान्तरमाह—

## सत्त्वशुद्धि-सौमनस्यैकाग्रतेन्द्रियजयात्म-दर्शनयोग्यत्वानि च ॥४१॥

भवन्तीति वाक्यशेषः। सत्त्वं प्रकाश-सुखाद्यात्मकं, तस्य शुद्धिः रजस्तमोभ्यामनभिभवः। सौमनस्यं खेदाननुभवेन मानसी प्रीतिः। एकाग्रता नियतविषये चेतसः स्थैर्य्यम्। इन्द्रियजयो विषयपराङ्मुखा-णामिन्द्रियाणाम् आत्मनि अवस्थानम्। आत्मदर्शने विवेकख्यातिरूपे, चित्तस्य योग्यत्वं समर्थत्वं, शौचाभ्यासवत एव एते सत्त्वशुद्ध्यादयः क्रमेण

प्रादुर्भवन्ति ; तथा हि, सत्त्वशुद्धेः सौमनस्यं, सौमनस्यादेकाग्रता, एकाग्रताया इन्द्रियजयः, तस्मादात्मदर्शनयोग्यतेति ॥ ४१ ॥

सन्तोषाभ्यासस्य फलमाह—

## सन्तोषादनुत्तमः सुखलाभः ॥ ४२ ॥

सन्तोषप्रकर्षे योगिनः तथाविधमान्तरं सुखमाविर्भवति, यस्य बाह्यं विषयसुखं शतांशेनापि न समम् ॥ ४२ ॥

तपसः फलमाह—

## कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥

तपः समभ्यस्यमानस्य चेतसः क्लेशादिलक्षणाशुद्धिक्षयद्वारेण कायेन्द्रियाणां सिद्धिप्रकर्षमादधाति। अयमर्थः,—चान्द्रायणादिना च चित्तक्लेशक्षयः, तत्क्षयादिन्द्रियादीनां सूक्ष्म-व्यवहित-विप्रकृष्टदर्शनादिसामर्थ्यमाविर्भवति, कायस्य यथेच्छमणुत्व-महत्त्वादीनि ॥ ४३ ॥

स्वाध्यायस्य फलमाह—

## स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥ ४४ ॥

अभिप्रेतमन्त्रजपादिलक्षणे स्वाध्याये प्रकृष्यमाणे योगिन इष्टाया अभिप्रेतायाः देवतायाः सम्प्रयोगो भवति सा देवता प्रत्यक्षा भवतीत्यर्थः ॥ ४४ ॥

ईश्वरप्रणिधानस्य फलमाह—

## समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥

ईश्वरे यत् प्रणिधानं भक्तिविशेषस्तस्मात् समाधेर्व्यक्तलक्षणस्याविर्भावो भवति, यस्मात् स च भगवानीश्वरः प्रसन्नः सन् अन्तरायरूपान् क्लेशान् परिहृत्य समाधिं सम्बोधयति ॥ ४५ ॥

यमनियमानुक्त्वा आसनमाह—

## तत्र स्थिरसुखमासनम् ॥ ४६ ॥

आस्यतेऽनेनेत्यासनं पद्मासन-दण्डासन-स्वस्तिकादि ; तत् यदा स्थिरं निष्कम्पं, सुखमनुद्वेजनीयञ्च भवति तदा योगाङ्गतां भजते ॥ ४६ ॥

तस्यैव स्थिर-सुखप्राप्त्यर्थमुपायमाह—

**प्रयत्नशैथिल्यानन्त्यसमापत्तिभ्याम् ॥ ४७ ॥**

तदासनं प्रयत्नशैथिल्येन आनन्त्यसमापत्त्या च स्थिरं सुखं भवतीति सम्बन्धः। यदा यदा आसनं बध्नामीति इच्छां करोति, प्रयत्नशैथिल्येऽपि अक्लेशेनैव तदा तदा आसनं सम्पद्यते, यदा चाकाशादिगते आनन्त्ये चेतसः समापत्तिः क्रियते अव्यवधानेन तादात्म्यमापद्यते, तदा देहाहङ्काराभावान्नासनं दुःखजनकं भवति। अस्मिंश्चासनजये सति समाध्यन्तरायभूता न प्रभवन्ति अङ्गमेजयत्वादयः॥ ४७ ॥

तस्यैवानुनिष्पादितं फलमाह—

**ततो द्वन्द्वानभिघातः ॥ ४८ ॥**

तस्मिन्नासनजये सति द्वन्द्वैः शीतोष्णक्षुत्तृषादिभिर्योगी नाभिहन्यते इत्यर्थः॥ ४८ ॥

आसनजयादनन्तरं प्राणायाममाह—

**तस्मिन् सति श्वास-प्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥**

आसनस्थैर्ये सति तन्निमित्तकप्राणायामलक्षणो योगाङ्गविशेषोऽनुष्ठेयो भवति। कीदृशः? श्वास-प्रश्वासयोर्गतिविच्छेदलक्षणः; श्वास-प्रश्वासौ निरुक्तौ, तयोस्त्रिधा रेचन-स्तम्भन-पूरणद्वारेण बाह्याभ्यन्तरेषु गतेः प्रवाहस्य, विच्छेदो धारणं, प्राणायाम उच्यते॥ ४९ ॥

तस्यैव सुखावगमाय विभज्य स्वरूपं कथयति—

**स तु बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घ-सूक्ष्मः ॥ ५० ॥**

बाह्यवृत्तिः श्वासो रेचकः, अन्तर्वृत्तिः प्रश्वासः पूरकः, आन्तरस्तम्भवृत्तिः कुम्भकः, तस्मिन् जलमिव कुम्भे निश्चलतया प्राणा अवस्थाप्यन्ते इति कुम्भकः। त्रिविधोऽयं प्राणायामः देशेन कालेन सङ्ख्यया चोपलक्षितो दीर्घ-सूक्ष्मसंज्ञो भवति। देशोपलक्षितो यथा नासाप्रदेशान्तादि। कालोपलक्षितो यथा षट्त्रिंशन्मात्रादिप्रमाणः। सङ्ख्योपलक्षितो

यथा इयतो वारान् कृत एतावद्भिः श्वास-प्रश्वासैः प्रथम उद्घातो भवतीति एतज्ज्ञानाय सङ्ख्याग्रहणमुपात्तम्। उद्घातो नाम नाभिमूलात् प्रेरितस्य वायोः शिरसि अभिहननम्॥ ५०॥

त्रीन् प्राणायामानभिधाय चतुर्थमभिधातुमाह—

**बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः॥ ५१॥**

प्राणस्य बाह्यो विषयो नासादेशान्तादिः, आभ्यन्तरो विषयो हृदय-नाभिचक्रादिः, तौ द्वौ विषयौ आक्षिप्य पर्य्यालोच्य यः स्तम्भरूपो गति-विच्छेदः स चतुर्थः प्राणायामः। तृतीयस्मात् कुम्भकात् अयमस्य विशेषः,—स बाह्याभ्यन्तरविषयौ अपर्य्यालोच्यैव सहसा तप्तोपलनिपतितजल-न्यायेन युगपत् स्तम्भवृत्त्या निष्पाद्यते; अस्य तु विषयद्वयापेक्षको निरोधः। अयमपि पूर्ववत् देशकालसङ्ख्याभिरुपलक्षितो द्रष्टव्यः॥ ५१॥

चतुर्विधस्य फलमाह—

**ततः क्षीयते प्रकाशावरणम्॥ ५२॥**

तस्मात् प्राणायामात् प्रकाशस्य चित्तसत्त्वगतस्य यदावरणं क्लेशरूपं तत् क्षीयते विनश्यतीत्यर्थः॥ ५२॥

फलान्तरमाह—

**धारणासु च योग्यता मनसः॥ ५३॥**

धारणा वक्ष्यमाणलक्षणा तासु, प्राणायामैः क्षीणदोषं मनो यत्र धार्य्यते तत्र तत् स्थिरीभवति न विक्षेपं भजते॥ ५३॥

प्रत्याहारस्य लक्षणमाह—

**स्वविषयासम्प्रयोगे चित्तस्वरूपानुकारे इन्द्रियाणां प्रत्याहारः॥ ५४॥**

इन्द्रियाणि विषयेभ्यः प्रतीपमाहृियन्तेऽस्मिन् इति प्रत्याहारः; स च कथं निष्पद्यते? इत्याह—चक्षुरादीनामिन्द्रियाणां स्वविषयो रूपादिः, तेन सम्प्रयोगः तदाभिमुख्येन वर्त्तनं, तदभावस्तदाभिमुख्यं परित्यज्य स्वरूपमात्रेऽवस्थानं, तस्मिन् सति चित्तमात्रानुकारिणीन्द्रियाणि

भवन्ति, यतश्चित्तमनुवर्त्तमानानि मधुकरराजमिव मक्षिकाः सर्वाणि इन्द्रियाणि प्रतीयन्ते ; अतश्चित्तनिरोधे तानि प्रत्याहृतानि भवन्ति, तेषां तत्स्वरूपानुकारः प्रत्याहार उक्तः ॥ ५४ ॥

फलमाह—

**ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥**

अभ्यस्यमाने हि प्रत्याहारे तथा वश्यानि आयत्तानि इन्द्रियाणि सम्पद्यन्ते, यथा बाह्यविषयाभिमुखतां नीयमानान्यपि न यान्ति इत्यर्थः ॥ ५५ ॥

तदेवं प्रथमपादोक्तयोगस्याङ्गभूतक्लेशतनूकरणफलं क्रियायोगमभिधाय, क्लेशानामुद्देशं स्वरूपं कारणं क्षेत्रं फलञ्चोक्त्वा, कर्मणामपि भेदं कारणं स्वरूपं फलञ्चाभिधाय, विपाकस्य कारणं स्वरूपञ्चाभिहितम् ; ततस्त्यज्यत्वात् क्लेशादीनां ज्ञानव्यतिरेकेण त्यागस्य अशक्यत्वात् ज्ञानस्य च शास्त्रायत्तत्वात् शास्त्रस्य हेय-हानकारण-उपादेय-उपादानकारण-बोधकत्वेन चतुर्व्यूहत्वात् हेयस्य हानव्यतिरेकेण स्वरूपानिष्पत्तेर्हान-सहितं चतुर्व्यूहं स्वस्वकारणसहितमभिधाय, उपादेयकारणभूताया विवेकख्यातेः कारणभूतानामन्तरङ्ग-बहिरङ्गभावेन स्थितानां यमादीनां स्वरूपं फलसहितं व्याहृत्य, आसनादीनां धारणापर्य्यन्तानां परस्परमुपकार्य्योपकारकभावेनावस्थितानामुद्देशमभिधाय, प्रत्येकं लक्षणं कारणपूर्वकं फलमभिहितम् ; तदयं योगो यम-नियमादिभिः प्राप्तबीजभावः, आसन-प्राणायामैरङ्कुरितः, प्रत्याहारेण पुष्पितः, ध्यान-धारणा-समाधिभिः फलिष्यतीति व्याख्यातः साधनपादः ।

इति महाराज-श्रीभोजराजविरचितायां राजमार्त्तण्डाभिधायां पातञ्जलवृत्तौ साधनपादः द्वितीयः ।

---

# अथ विभूतिपादः ।

यत्पादपद्मस्मरणादणिमादिविभूतयः ।
भवन्ति भविनामस्तु भूतनाथः स भूतये ॥

तदेवं पूर्वोद्दिष्टं धारणाद्यङ्गत्रयं निर्णेतुं संयमसंज्ञाऽभिधानपूर्वकं बाह्याभ्यन्तरादिसिद्धिप्रतिपादनाय लक्षयितुमुपक्रमते । तत्र धारणायाः स्वरूपमाह—

## देशबन्धश्चित्तस्य धारणा ॥ १ ॥

देशे नाभिचक्र-नासाग्रादौ चित्तस्य बन्धो विषयान्तरपरिहारेण यत् स्थिरीकरणं, सा चित्तस्य धारणोच्यते । अयमर्थः,—मैत्र्यादिचित्तपरिकर्मवासितान्तःकरणेन यम-नियमवता जितासनेन परिहृतप्राणविक्षेपेण प्रत्याहृतेन्द्रियग्रामेण निर्बाधे प्रदेशे ऋजुकायेन जितद्वन्द्वेन योगिना नासाग्रादौ सम्प्रज्ञातस्य समाधेरभ्यासाय चित्तस्य स्थिरीकरणं कर्त्तव्यमिति ॥ १ ॥

धारणामभिधाय ध्यानमभिधातुमाह—

## तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥

तत्र तस्मिन् प्रदेशे, यत्र चित्तं धृतं तत्र, प्रत्ययस्य ज्ञानस्य, या एकतानता विसदृशपरिणामपरिहारद्वारेण यदेव धारणायाम् अवलम्बनीकृतं, तदवलम्बनतयैव निरन्तरमुत्पत्तिः सा ध्यानमुच्यते ॥ २ ॥

चरमयोगाङ्गं समाधिमाह—

## तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥३॥

तदेवोक्तलक्षणं ध्यानं, यत्रार्थमात्रनिर्भासम् अर्थाकारसमावेशाद्भूतार्थरूपं, न्यग्भूतज्ञानस्वरूपत्वेन स्वरूपशून्यतामिवापद्यते, स समाधिरित्युच्यते ; सम्यक् आधीयते एकाग्रीक्रियते विक्षेपान् परिहृत्य मनो यत्र स समाधिः ॥ ३ ॥

उक्तलक्षणस्य योगाङ्गत्रयस्य व्यवहाराय स्वशास्त्रे तान्त्रिकीं संज्ञां कर्त्तुमाह—

**त्रयमेकत्र संयमः ॥ ४ ॥**

एकस्मिन् विषये धारणा-ध्यान-समाधित्रयं प्रवर्त्तमानं संयमसंज्ञया शास्त्रे व्यवह्रियते ॥ ४ ॥

तस्य फलमाह—

**तज्जयात् प्रज्ञाऽऽलोकः ॥ ५ ॥**

तस्य संयमस्य, जयादभ्यासेन सात्मीत्पादनात्, प्रज्ञाया विवेकख्यातेः, आलोकः प्रसवो भवति, प्रज्ञा ज्ञेयं सम्यगवभासयतीत्यर्थः ॥ ५ ॥

तस्योपयोगमाह—

**तस्य भूमिषु विनियोगः ॥ ६ ॥**

तस्य संयमस्य, भूमिषु स्थूल-सूक्ष्मावलम्बनभेदेन स्थितासु चित्तवृत्तिषु, विनियोगः कर्त्तव्यः, अधरामधरां चित्तभूमिं जितां जितां ज्ञात्वोत्तरस्यां भूमौ संयमः कार्य्यः ; न ह्यनात्मीकृताधरभूमिरुत्तरस्यां भूमौ संयमं कुर्वाणः फलभाग्भवति ॥ ६ ॥

साधनपादे योगाङ्गानि अष्टौ उद्दिश्य पञ्चानां लक्षणं विधाय त्रयाणां कथं न कृतम् ? इत्याशङ्क्याह—

**त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥**

पूर्वेभ्यो यमादिभ्यो योगाङ्गेभ्यः पारम्पर्य्येण समाधेरुपकारकेभ्यः, धारणादियोगाङ्गत्रयं सम्प्रज्ञातस्य समाधेरन्तरङ्गं, समाधिस्वरूप-निष्पादनात् ॥ ७ ॥

तस्यापि समाध्यन्तरापेक्षया बहिरङ्गत्वमाह—

**तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥**

निर्बीजस्य निरालम्बनस्य शून्यभावनाऽपरपर्य्यायस्य समाधेः, तदपि योगाङ्गत्रयं, बहिरङ्गं, पारम्पर्य्येणोपकारकत्वात् ॥ ८ ॥

इदानीं योगसिद्धीर्व्याख्यातुकामः संयमस्य विषयं विशुद्धिं कर्त्तुं क्रमेण परिणामत्रयमाह—

**व्युत्थान-निरोधसंस्कारयोरभिभव-प्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥**

व्युत्थानं क्षिप्त-मूढ़-विक्षिप्ताख्यं भूमित्रयं, निरोधः प्रकृष्टसत्त्वस्य अङ्गितया चेतसः परिणामः, ताभ्यां व्युत्थान-निरोधाभ्यां, यौ जनितौ संस्कारौ तयोर्यथाक्रमम् अभिभव-प्रादुर्भावौ यदा भवतः; अभिभवो न्यग्भूततया कार्य्यकरणसामर्थ्येनावस्थानं, प्रादुर्भावो वर्त्तमानेऽध्वनि अभिव्यक्तरूपतया आविर्भावः, तदा निरोधक्षणे चित्तस्योभयक्षण-वृत्तित्वादन्वयो यः स निरोधपरिणाम उच्यते। अयमर्थः,—यदा व्युत्थानसंस्काररूपो धर्मस्तिरोभूतो भवति, निरोधसंस्काररूपश्च आविर्भवति, धर्मिरूपतया च चित्तमुभयान्वयित्वेऽपि निरोधात्मना अवस्थितं प्रतीयते, तदा स निरोधपरिणामशब्देन व्यवह्रियते, चलत्वात् गुणवृत्तस्य यद्यपि चेतसो निश्चलत्वं नास्ति, तथाऽपि एवम्भूतः परिणामः स्थैर्य्यमुच्यते ॥ ९ ॥

तस्यैव फलमाह—

**तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥**

तस्य चेतसः, निरुक्तान्निरोध-संस्कारात् प्रशान्तवाहिता भवति, परिहृतविक्षेपतया सदृशप्रवाह-परिणामि चित्तं भवति इत्यर्थः ॥ १० ॥

निरोधपरिणामम् अभिधाय समाधिपरिणाममाह—

**सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधि-परिणामः ॥ ११ ॥**

सर्वार्थता चलत्वान्नानाविधार्थग्रहणं, चित्तस्य विक्षेपो धर्मः, एतस्मिन्नेवालम्बने सदृशपरिणामिता एकाग्रता, साऽपि चित्तस्य धर्मः,

तयोर्यथाक्रमं क्षयोदयौ सर्वार्थतालक्षणस्य धर्मस्य क्षयः ऽत्यन्ताभिभवः, एकाग्रतालक्षणस्य धर्मस्य प्रादुर्भावोऽभिव्यक्तिः, चित्तस्योद्रिक्तसत्त्वस्यान्वयितया अवस्थानं समाधिपरिणाम इत्युच्यते। पूर्वस्मात् परिणामादस्यायं विशेषः,—तत्र संस्कारलक्षणयोः धर्मयोरभिभव-प्रादुर्भावौ, पूर्वस्य व्युत्थानसंस्काररूपस्य न्यग्भावः, उत्तरस्य निरोधसंस्काररूपस्योद्भवः अनभिभूतत्वेनावस्थानम्; इह तु क्षयोदयाविति सर्वार्थतारूपस्य विक्षेपस्यात्यन्ततिरस्कारादनुत्पत्तिरतीतेऽध्वनि प्रवेशः क्षयः, एकाग्रतालक्षणस्य धर्मस्य उद्भवो वर्त्तमानेऽध्वनि प्रकटत्वम् ॥ ११ ॥

तृतीयमेकाग्रतापरिणाममाह—

## शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रता-परिणामः ॥ १२ ॥

समाहितस्यैव चित्तस्यैकप्रत्ययो वृत्तिविशेषः शान्तः अतीतमध्वानं प्रविष्टः, अपरस्तु उदितो वर्त्तमानेऽध्वनि स्फुरितः, द्वावपि समाहितचित्तत्वेन तुल्यावेकरूपालम्बत्वेन सदृशौ, प्रत्ययौ उभयत्रापि समाहितस्यैव चित्तस्यान्वयित्वेनावस्थानं, स एकाग्रता-परिणाम इत्युच्यते ॥ १२ ॥

चित्तपरिणामोक्तं रूपमन्यत्राप्यतिदिशन्नाह—

## एतेन भूतेन्द्रियेषु धर्म-लक्षणावस्थापरिणामा व्याख्याताः ॥ १३ ॥

एतेन त्रिविधेनोक्तेन चित्तपरिणामेन, भूतेषु स्थूल सूक्ष्मेषु, इन्द्रियेषु बुद्धि-कर्मान्तःकरणभेदेनावस्थितेषु,धर्म-लक्षणावस्थाभेदेन त्रिविधपरिणामो व्याख्यातोऽवगन्तव्यः। अवस्थितस्य धर्मिणः पूर्वधर्मनिवृत्तौ धर्मान्तरापत्तिः धर्मपरिणामः; यथा—मृल्लक्षणस्य धर्मिणः पिण्डरूपधर्मपरित्यागेन घटरूपधर्मान्तरस्वीकारो धर्मपरिणाम इत्युच्यते। लक्षणपरिणामो यथा—तस्यैव घटस्यानागताध्वपरित्यागेन वर्त्तमानाध्वस्वीकारः। तत्परि-

त्यागेनातीताध्वपरिग्रह अवस्थापरिणामः ; यथा—तस्यैव घटस्य प्रथमद्वितीययोः सदृशयोः काललक्षणयोः, अन्वयित्वेन यतश्च गुणवृत्तिर्न अपरिणम्यमाना क्षणमप्यस्ति ॥ १३ ॥

ननु कोऽयं धर्मी ? इत्याशङ्क्य धर्मिणो लक्षणमाह—

## शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥

शान्ता ये कृतस्वस्वव्यापारा अतीतेऽध्वनि अनुप्रविष्टाः, उदिता ये अनागतमध्वानं परित्यज्य वर्त्तमानेऽध्वनि स्वव्यापारं कुर्वन्ति, अव्यपदेश्या ये शक्तिरूपेण स्थिता व्यपदेष्टुं न शक्यन्ते, तेषां यथास्वं सर्वात्मकमित्येवमादयो नियतकार्य्य-कारणरूपयोग्यतया अवच्छिन्ना शक्तिरेवेह धर्मशब्देनाभिधीयते, तं त्रिविधमपि धर्मं यो धर्मी अनुपतति अनुवर्त्तते, अन्वयित्वेन स्वीकरोति, स शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी इति उच्यते ; यथा—सुवर्णं रुचकरूपधर्मापरित्यागेन स्वस्तिकरूपधर्मान्तरपरिग्रहे सुवर्णरूपतया परिवर्त्तमानं तेषु धर्मेषु कथञ्चिद्भिन्नेषु धर्मिरूपतया सामान्यात्मना धर्मरूपतया विशेषात्मना स्थितमन्वयित्वेनावभासते ॥ १४ ॥

एकस्य धर्मिणः कथमनेके धर्माः ? इत्याशङ्कामपनेतुमाह—

## क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥

धर्माणाम् उक्तलक्षणानां यः क्रमस्तस्य यत् प्रतिक्षणमन्यत्वं परिदृश्यमानं, परिणामस्योक्तलक्षणस्यान्यत्वे नानाविधत्वे, हेतुर्लिङ्गं, ज्ञापकं भवति। अयमर्थः,—योऽयं नियतः क्रमः मृच्चूर्णात् मृत्पिण्डः, ततः कपालानि, तेभ्यश्च घट इत्येवं क्रमरूपः परिदृश्यमानः परिणामस्य अन्यत्वमावेदयति। तस्मिन्नेव धर्मिणि यो लक्षणपरिणामस्य अवस्थापरिणामस्य च क्रमः, सोऽपि अनेनैव न्यायेन परिणामान्यत्वे गमकोऽवगन्तव्यः। सर्व एव भावा नियतेनैव क्रमेण प्रतिक्षणं परिणम्यमानाः परिदृश्यन्ते ; अतः सिद्धं क्रमान्यत्वं, क्रमान्यत्वात् परिणामान्यत्वम्। सर्वेषां चित्तादीनां परिणम्यमानानां केचिद्धर्माः प्रत्यक्षेणैवोपलभ्यन्ते ;

यथा—सुखादयः संस्थानादयश्च। केचिदेकान्तेनानुमानगम्याः; यथा—धर्म-संस्कार-शक्तिप्रभृतयः। धर्मिणश्च भिन्नाभिन्नरूपतया सर्वत्रानुगमः ॥ १५ ॥

इदानीमुक्तस्य संयमस्य विषयप्रदर्शनद्वारेण सिद्धीः प्रतिपादयितुमाह—

**परिणामत्रयसंयमादतीतानागतज्ञानम् ॥१६॥**

धर्म-लक्षणावस्थाभेदेन यत् परिणामत्रयमुक्तं, तत्र संयमात् तस्मिन् विषये पूर्वोक्तसंयमस्य करणात्, अतीतानागतज्ञानं योगिनः समाधिर्भवति। इदमत्र तात्पर्य्यम्—अस्मिन् धर्मिणि अयं धर्मः, इदं लक्षणम्, इयमवस्था च अनागतादध्वनः समेत्य वर्त्तमाने अध्वनि स्वव्यापारं विधायातीतम् अध्वानं प्रविशतीत्येवं परिहृतविक्षेपतया यदा संयमं करोति, तदा यत् किञ्चिदनुत्पन्नमतिक्रान्तं, तत् सर्वं योगी जानाति; यतश्चित्तस्य शुद्धसत्त्वप्रकाशरूपत्वात् सर्वार्थग्रहणसामर्थ्यमविद्यादिभिर्विक्षेपैरपक्रियते। यदा तु तैस्तैरुपायैर्विक्षेपाः परिक्रियन्ते, तदा निवृत्तमलस्येव आदर्शस्य सर्वार्थग्रहणसामर्थ्यमेकाग्रताबलादाविर्भवति ॥ १६ ॥

सिद्धान्तरमाह—

**शब्दार्थ-प्रत्ययानामितरेतराध्यासात् सङ्करः, तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम् ॥१७॥**

शब्दः श्रोत्रेन्द्रियग्राह्यो नियतक्रमवर्णात्मा नियतैकार्थप्रतिपत्तिविच्छिन्नः; यदि वा, क्रमरहितस्फोटात्मा ध्वनिसंस्कृतबुद्धिग्राह्यः, उभयथाऽपि पदरूपो वाक्यरूपश्च, तयोरेकार्थप्रतिपत्तौ सामर्थ्यात्; अर्थः जाति-गुण-क्रियादिः; प्रत्ययो ज्ञानं, विषयाकारा बुद्धिवृत्तिः, एषां शब्दार्थज्ञानानां व्यवहारे इतरेतराध्यासात् भिन्नानामपि बुद्ध्येकरूपतासम्पादनात् सङ्कीर्णत्वम्। तथा हि, गामानयेत्युक्ते कश्चित् गोलक्षणमर्थं गोत्वजात्यवच्छिन्नं सास्नादिमत् पिण्डरूपं शब्दञ्च तद्वाचकं ज्ञानञ्च तद्ग्राहकमभेदेनैवाध्यवस्यति, न त्वस्य गोशब्दो वाचकः, अयं गोशब्दस्य

वाच्यः, तयोरिदं ग्राहकं ज्ञानमिति भेदेन व्यवहरति। तथा हि, कोऽयमर्थः? कोऽयं शब्दः? किमिदं ज्ञानम्? इति पृष्टः सर्वत्रैकतारूपमेवोत्तरं ददाति गौरिति। स यद्येकरूपतां न प्रतिपद्यते, कथमेकरूपमुत्तरं प्रयच्छति? एवं तस्मिन् अवस्थिते योऽयं प्रविभागः,—इदं शब्दस्य तत्त्वं, यद्वाचकत्वं नाम, इदमर्थस्य, यद्वाच्यत्वम्, इदं ज्ञानस्य, यत् प्रकाशकत्वमिति प्रविभागं विधाय तस्मिन् प्रविभागे यः संयमं करोति, तस्य सर्वेषां भूतानां मृग-पक्षि-सरीसृपाणां यत् रुतं यः शब्दस्तत्र ज्ञानमुत्पद्यते अनेनैवाभिप्रायेण एतेन प्राणिना अयं शब्दः समुच्चारित इति सर्वं जानाति ॥ १७ ॥

सिद्धान्तरमाह—

## संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम् ॥ १८ ॥

द्विविधाः चित्तस्य वासनारूपाः संस्काराः ; केचित् स्मृतिमात्रोत्पादनफलाः, केचित् जात्यायुर्भोगलक्षणा विपाकहेतवः ; यथा—धर्माधर्माख्याः, तेषु संस्कारेषु यदा संयमं करोति, एवं मया सोऽर्थोऽनुभूतः, एवं मया सा क्रिया निष्पादिता इति पूर्ववृत्तमनुसन्दधानो भावयन्नेव प्रबोधकमन्तरेण उद्बुद्धसंस्कारः सर्वमतीतं स्मरति ; क्रमेण साक्षात्कृतेषु उद्बुद्धेषु संस्कारेषु पूर्वजन्मान्तरानुभूतानपि जात्यादीन् प्रत्यक्षेण पश्यति ॥ १८ ॥

सिद्धान्तरमाह—

## प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥

प्रत्ययस्य परचित्तस्य केनचित् मुखरागादिना लिङ्गेन गृहीतस्य, यदा संयमं करोति, तदा परकीयचित्तस्य ज्ञानमुत्पद्यते, सरागम् अस्य चित्तं वीतरागं वेति परचित्तगतान् सर्वानपि धर्मान् जानातीत्यर्थः ॥ १९ ॥

अस्यैव परचित्तज्ञानस्य विशेषज्ञानमाह—

## न च तत् सालम्बनं तस्याविषयीभूतत्वात् ॥२०॥

तस्य परस्य यच्चित्तं तत् सालम्बनं स्वकीयेनालम्बनेन सहितं न शक्यते ज्ञातुम्, आलम्बनस्य केनचिल्लिङ्गेनाविषयीकृतत्वात्, लिङ्गाच्चित्त-

मात्रं परस्यावगतं, न तु नीलविषयमस्य चित्तं पीतविषयमिति वा यच्च न गृहीतं, तत्र संयमस्य कर्त्तुमशक्यत्वात् न भवति परचित्तस्य यो विषयः तत्र ज्ञानं, तस्मात् परकीयचित्तं नालम्बनसहितं गृह्यते, तस्य आलम्बनस्य अगृहीतत्वात्; चित्तधर्माः पुनर्गृह्यन्ते एव; यदा तु किमनेनालम्बितमिति प्रणिधानं करोति, तदा तत्संयमात्तद्विषयमपि ज्ञानम् उत्पद्यते एव ॥ २० ॥

सिद्धान्तरमाह—

**कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुः-प्रकाशासंयोगेऽन्तर्द्धानम् ॥ २१ ॥**

कायः शरीरं, तस्य रूपं चक्षुर्ग्राह्यो गुणः, तस्मिन् तस्मिन् काये रूपमिति संयमात्तस्य रूपस्य चक्षुर्ग्राह्यत्वरूपा या शक्तिस्तस्याः स्तम्भ भावनावशात् प्रतिबन्धे, चक्षुःप्रकाशासंयोगे चक्षुषः प्रकाशः सत्त्वधर्मः, तस्य असंयोगे तद्ग्रहणव्यापाराभावे योगिनोऽन्तर्द्धानं भवति, न केनचिदसौ दृश्यते इत्यर्थः ॥ २१ ॥

**एतेन शब्दाद्यन्तर्द्धानमुक्तम् ॥ २२ ॥ ***

एतेनैव रूपान्तर्द्धानोपायप्रदर्शनेन शब्दादीनां श्रोत्रादिग्राह्याणा-मन्तर्द्धानमुक्तं वेदितव्यम् ॥ २२ ॥

सिद्धान्तरमाह—

**सोपक्रमं निरुपक्रमञ्च कर्म तत्संयमादपरान्त-ज्ञानमरिष्टेभ्यो वा ॥ २३ ॥**

आयुर्विपाकं यत् पूर्वकृतं कर्म तत् द्विप्रकारं, सोपक्रमं निरुपक्रमञ्च; तत्र सोपक्रमं यत् फलजननाय सहोपक्रमेण कार्य्यकरणाभिमुख्येन वर्त्तते; यथा—उष्णप्रदेशे प्रसारितार्द्रवासः शीघ्रमेव शुष्यति। उक्तविपरीतं निरुपक्रमम्; यथा—तदेवार्द्रवासः संवर्त्तितम् अनुष्णदेशे

* सूत्रमिदं व्यासभाष्ये मणिप्रभायाञ्च एकविंशतिसूत्रस्य वृत्तिमध्ये पठितं, भोजेन तु इदं पृथक् सूत्रतया सन्निवेशितमिति।

चिरेण शुष्यति। तस्मिन् द्विविधे कर्मणि यः संयमं करोति, किं मम कर्म शीघ्रविपाकम्? चिरविपाकं वा? एवं ध्यानदार्ढ्यादपरान्त-ज्ञानमस्योत्पद्यते, अपरान्तः शरीरवियोगः, तस्मिन् ज्ञानम् अस्मिन् काले अमुष्मिन् देशे मम शरीरवियोगो भविष्यतीति निःसंशयं जानाति। अरिष्टेभ्यो वा—अरिष्टानि त्रिविधानि, आध्यात्मिकाधिभौतिकाधि-दैविकानि। तत्राध्यात्मिकानि पिहितकर्णः कौष्ठ्यस्य वायोर्घोषं न शृणोति इत्येवमादीनि। आधिभौतिकानि अकस्मात् विकृतपुरुषदर्श-नादीनि। आधिदैविकानि अकाण्डे एव द्रष्टुमशक्यस्वर्गादिपदार्थदर्श-नादीनि, तेभ्यः शरीरवियोगकालं जानाति। स यद्यपि अयोगिना-मप्यरिष्टेभ्यः प्रायेण तज्ज्ञानमुत्पद्यते, तथाऽपि तेषां सामान्याकारेण तत् संशयरूपं, योगिनां पुनर्नियतदेशकालतया प्रत्यक्षवदव्यभिचारि ॥२३॥

परिकर्मनिष्पादिताः सिद्धीः प्रतिपादयितुमाह—

## मैत्र्यादिषु बलानि ॥ २४ ॥

मैत्री-करुणा-मुदितोपेक्षासु यो विहितः संयमस्तद्बलानि तासां मैत्र्यादीनां सम्बन्धीनि प्रादुर्भवन्ति; मैत्री-करुणा-मुदितोपेक्षास्तथाऽस्य प्रकर्षं गच्छन्ति यथा सर्वस्य मित्रत्वादिकम् अयं प्रतिपद्यते ॥ २४ ॥

सिद्ध्यन्तरमाह—

## बलेषु हस्तिबलादीनि ॥ २५ ॥

हस्त्यादिसम्बन्धिषु बलेषु कृतसंयमस्य तद्बलानि हस्त्यादिबलानि आविर्भवन्ति। तदयमर्थः,—यस्मिन् हस्तिबले वायुवेगे सिंहवीर्ये वा तन्मयीभावेन अयं संयमं करोति तत्तत्सामर्थ्ययुक्तं सत्त्वमस्य प्रादुर्भवतीत्यर्थः ॥ २५ ॥

सिद्ध्यन्तरमाह—

## प्रवृत्त्यालोकन्यासात् सूक्ष्म-व्यवहित-विप्रकृष्ट-ज्ञानम् ॥ २६ ॥

प्रवृत्तिर्विषयवती ज्योतिष्मती च प्रागुक्ता, तस्या यः आलोकः सात्त्विक-

प्रकाशः, तस्य निखिलेषु विषयेषु न्यासात् तद्वासितानां विषयाणां भावनातः, अन्तःकरणेषु इन्द्रियेषु च प्रकृष्टशक्तिमापन्नेषु सुसूक्ष्मस्य परमाण्वादेः, व्यवहितस्य भूम्यन्तर्गतस्य निधानादेः, विप्रकृष्टस्य मेरुपरपार्श्ववर्त्तिनो रसातलादेर्ज्ञानमुत्पद्यते ॥ २६ ॥

एतत्समानवृत्तान्तसिद्ध्यन्तरमाह—

## भुवनज्ञानं सूर्य्ये संयमात् ॥ २७ ॥

सूर्य्ये प्रकाशसंयमाय यः संयमं करोति तस्य सप्तभूर्भवःस्वःप्रभृतिषु लोकेषु यानि भुवनानि तत्तत्सन्निवेशभाञ्जि स्थानानि, तेषु यथावदस्य ज्ञानमुत्पद्यते। पूर्वस्मिन् सूत्रे सात्विकप्रकाश आलम्बनतयोक्तः, इह तु भौतिक इति विशेषः ॥ २७ ॥

भौतिकप्रकाशान्तरालम्बनद्वारेण सिद्ध्यन्तरमाह—

## चन्द्रे ताराव्यूहज्ञानम् ॥ २८ ॥

ताराणां यो व्यूहो विशिष्टः सन्निवेशस्तस्य चन्द्रे कृतसंयमस्य ज्ञानमुत्पद्यते। सूर्य्यप्रकाशेन हततेजस्कत्वात्ताराणां सूर्य्यसंयमात्तज्ज्ञानं न शक्यं भवितुमर्हतीति पृथगुपायोऽभिहितः ॥ २८ ॥

सिद्ध्यन्तरमाह—

## ध्रुवे तद्गतिज्ञानम् ॥ २९ ॥

ध्रुवे निश्चले ज्योतिषां प्रधाने कृतसंयमस्य तासां ताराणां या गतिः प्रत्येकं नियतकाला नियतदेशा च, तस्यां ज्ञानमुत्पद्यते, इयं तारा अयं ग्रहः इयता कालेनामुं राशिम् इदं नक्षत्रं यास्यतीति सर्वं जानाति। इदं कालज्ञानस्य फलमुक्तं भवति ॥ २९ ॥

बाह्याः सिद्धीः प्रतिपाद्य आन्तराः सिद्धीः प्रतिपादयितुमुपक्रमते—

## नाभिचक्रे कायव्यूहज्ञानम् ॥ ३० ॥

शरीरमध्यवर्त्ति नाभिसंज्ञकं यत् षोड़शारं चक्रं तस्मिन् कृतसंयमस्य योगिनः कायगतो व्यूहो विशिष्टरस-मल-धातु-नाड्यादीनामवस्थानं, तत

ज्ञानमुत्पद्यते। इदमुक्तं भवति—नाभिचक्रं शरीरमध्यवर्त्ति सर्वतः प्रसृतानां नाड्यादीनां मूलभूतम्, अतस्तत्र कृतावधानस्य समग्रसन्निवेशो यथावत् आभाति॥ ३०॥

सिद्ध्यन्तरमाह—

## कण्ठकूपे क्षुत्पिपासानिवृत्तिः॥ ३१॥

कण्ठे गले कूपः कण्ठकूपः जिह्वामूले जिह्वाचञ्चोरधस्तात् कूप इव कूपो गर्त्ताकारप्रदेशः, प्राणादेर्यत्संस्पर्शात् क्षुत्पिपासादयः प्रादुर्भवन्ति, तस्मिन् कृतसंयमस्य योगिनः क्षुत्पिपासादयो निवर्त्तन्ते, घण्टिकाधस्तात् स्रोतसा धार्य्यमाणे तस्मिन् भाविते भवत्येवंविधा सिद्धिः॥ ३१॥

सिद्ध्यन्तरमाह—

## कूर्मनाड्यां स्थैर्य्यम्॥ ३२॥

कण्ठकूपस्याधस्तात् 'या 'कूर्माख्या नाड़ी तस्यां कृतसंयमस्य चेतसः स्थैर्य्यमुत्पद्यते, तत्स्थानमनुप्रविष्टस्य चञ्चलता न भवतीत्यर्थः, यदि वा—कायस्य स्थैर्य्यमुत्पद्यते न केनचित् स्पन्दयितुं शक्यते इत्यर्थः॥ ३२॥

सिद्ध्यन्तरमाह—

## मूर्द्धज्योतिषि सिद्धदर्शनम्॥ ३३॥

शिरःकपाले ब्रह्मरन्ध्राख्ये छिद्रे प्रकाशाधारत्वात् ज्योतिषि, यथा गृहाभ्यन्तरस्थस्य मणेः प्रसरन्ती प्रभा कुञ्चिताकारेव सर्वप्रदेशे सङ्घटते, तथा हृदयस्थः सात्त्विकः प्रकाशः प्रसृतस्तत्र सम्पिण्डितत्वं भजते; तत्र कृतसंयमस्य ये द्यावा-पृथिव्योरन्तरालवर्त्तिनः सिद्धा दिव्याः पुरुषाः, तेषा-मितरप्राणिभिरदृश्यानां, तस्य दर्शनं भवति, तान् पश्यति तैश्च स सम्भाषते इत्यर्थः॥ ३३॥

सर्वज्ञत्वे उपायमाह—

## प्रातिभाद्वा सर्वम्॥ ३४॥

निमित्तानपेक्षं मनोमात्रजन्यम् अविसंवादकं प्रागुत्पद्यमानं ज्ञानं

प्रतिभा, तस्यां संयमे क्रियमाणे प्रातिभं विवेकख्यातेः पूर्वविभावकं ज्ञानमुदेति ; यथा उदेष्यतः सवितुः पूर्वं प्रभा प्रादुर्भवति, तद्वत् विवेकख्यातेः पूर्वविभावकं सर्वविषयं ज्ञानमुत्पद्यते, तस्मिन् सति संयमान्तरानपेक्षः सर्वं जानातीत्यर्थः ॥ ३४ ॥

सिद्ध्यन्तरमाह—

**हृदये चित्तसंवित् ॥ ३५ ॥**

हृदयं शरीरस्य प्रदेशविशेषः, तस्मिन् अधोमुखस्वल्पपुण्डरीकाभ्यन्तरे अन्तःकरणसत्त्वस्य स्थानं, तत्र कृतसंयमस्य स्व-परचित्तज्ञानमुत्पद्यते, स्वचित्तगताः सर्वा वासनाः,परचित्तगतांश्च रागादीन् जानातीत्यर्थः ॥३५॥

सिद्ध्यन्तरमाह—

**सत्त्व-पुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषात् भोगः परार्थान्यस्वार्थसंयमात् पुरुषज्ञानम् ॥३६॥**

सत्त्वं प्रकाशसुखात्मकः प्राधानिकः परिणामविशेषः, पुरुषो भोक्ता अधिष्ठातृरूपः तयोः, अत्यन्तासङ्कीर्णयोर्भोग्य-भोक्तृरूपत्वात् अचेतन-चेतनत्वाच्च भिन्नयोः, तयोर्यः प्रत्ययस्याविशेषो भेदेनाप्रतिभासनं तस्मात्, सत्त्वस्यैव कर्तृताप्रत्ययेन या सुख-दुःखसंवित् स भोगः। सत्त्वस्य स्वार्थ-नैरपेक्ष्येण परार्थः पुरुषार्थनिमित्तः, तस्मात् अन्यो यः स्वार्थः पुरुषस्य स्वरूपमात्रालम्बनः परित्यक्ताहङ्कारसत्त्वे या चिच्छायासङ्क्रान्तिस्तत्र कृतसंयमस्य पुरुषविषयं ज्ञानमुत्पद्यते, तत्र तदेवं-रूपं स्वालम्बनं ज्ञानं सत्त्वनिष्ठं पुरुषो जानातीत्यर्थः। न पुनः पुरुषः ज्ञाता ज्ञानस्य विषयभावमापद्यते, ज्ञेयत्वापत्तेः, ज्ञातृ-ज्ञेयत्वयोरत्यन्तविरोधात् ॥ ३६ ॥

अस्यैव संयमस्य फलमाह—

**ततः प्रातिभ-श्रावण-वेदनाऽऽदर्शास्वाद-वार्त्ता जायन्ते ॥ ३७ ॥**

ततः पुरुषसंयमादभ्यस्यमानात् व्युत्थितस्यापि ज्ञानानि जायन्ते।

तत्र प्रातिभं पूर्वोक्तं ज्ञानं, तस्याविर्भवनात् सूक्ष्मादिकमर्थं पश्यति। श्रावणं श्रोत्रेन्द्रियजज्ञानं, तस्माच्च प्रकृष्टं दिव्यं शब्दं जानाति। वेदना स्पर्शेन्द्रियजं ज्ञानं, वेद्यतेऽनयेति कृत्वा तान्त्रिकया संज्ञया व्यवह्रियते; तस्मात् दिव्यस्पर्शविषयं ज्ञानं समुपजायते। आदर्शः चक्षुरिन्द्रियजं ज्ञानम्, आ समन्तात् दृश्यतेऽनुभूयते रूपमनेनेति कृत्वा; तस्य प्रकर्षाद्दिव्यं रूपज्ञानमुत्पद्यते। आस्वादो रसनेन्द्रियजं ज्ञानम्, आस्वाद्यतेऽनेनेति कृत्वा; तस्मिन् प्रकृष्टे दिव्ये रससंविदुपजायते। वार्त्ता गन्धसंवित्, वृत्तिशब्देन तान्त्रिक्या परिभाषया घ्राणेन्द्रियमुच्यते, वर्त्तते गन्धविषये इति वृत्तेर्घ्राणेन्द्रियजाता वार्त्ता गन्धसंवित्, तस्यां प्रकृष्यमाणायां दिव्यगन्धोऽनुभूयते ॥ ३७ ॥

एतेषां फलविशेषाणां विशेषविभागमाह—

**ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३८ ॥**

ते प्राक् प्रतिपादिताः फलविशेषाश्च, समाधेः प्रकर्षे उपसर्गा उपद्रवा विघ्नाः, तत्र हर्ष-स्मयादिकरणेन समाधिः शिथिलीभवति। व्युत्थाने तु पुनर्व्यवहारदशायां विशिष्टफलदायकत्वात् सिद्धयो भवन्ति ॥ ३८ ॥

सिद्ध्यन्तरमाह—

**बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्चित्तस्य परशरीरप्रवेशः ॥ ३९ ॥**

व्यापकत्वादात्म-चित्तयोर्नियतकर्मवशादेव शरीरान्तर्गतयोरेव भोक्तृ-भोग्यभावेन यत् संवेदनमुपजायते स एव शरीरबन्ध इत्युच्यते, तत् यदा समाधिवशात् बन्धकारणं धर्माधर्माख्यं शिथिलं भवति तानव-मापद्यते; चित्तस्य च योऽसौ प्रचारो हृदयप्रदेशादिन्द्रियद्वारेण विषयाभिमुख्येन प्रसरः, तस्य संवेदनं ज्ञानम्, इयं चित्तवहा नाडी, अनया चित्तं वहति, इयं च रस-प्राणादिवहाभ्यो नाडीभ्यो विलक्षणेति स्व-परशरीरयोः यदा स्वशरीरस्य सञ्चारं जानाति तदा परकीयं मृतं जीवच्छरीरं वा चित्तसञ्चारद्वारेण प्रविशति। चित्तञ्च परशरीरे प्रविशदिन्द्रियाण्यपि अनुवर्त्तन्ते मधुकरराजमिव मक्षिकाः। अथ

परशरीरप्रविष्टो योगी स्वशरीरवत् तेन सर्वं व्यवहरति ; यतो व्यापकयोश्चित्त-पुरुषयोर्भोगसङ्कोचकारणं कर्म, तत् चेत् समाधिना छिन्नं, तदा स्वातन्त्र्यात् सर्वत्रैव भोगनिष्पत्तिः॥ ३९॥

सिद्ध्यन्तरमाह—

**उदानजयाज्जल-पङ्क-कण्टकादिष्वसङ्ग उत्क्रान्तिश्च॥ ४०॥**

समस्तानामिन्द्रियाणां तुषज्वालावत् युगपदुत्थिता वृत्तिः सा जीवनशब्दवाच्या ; तस्याः क्रियाभेदात् प्राणापानादिसंज्ञाभिर्व्यपदेशः। तत्र हृदयान्मुखनासिकाद्वारेण वायोः प्रणयनात् प्राण इत्युच्यते। नाभिदेशात् पादाङ्गुष्ठपर्य्यन्तमपनयनादपानः। नाभिदेशं परिवेष्ट्य समन्तात् नयनात् समानः। कृकाटिकादेशादाशिरोवृत्तेरुन्नयनादुदानः। व्याप्य नयनात् सर्वशरीरव्यापी व्यानः। तत्र उदानस्य संयमद्वारेण जयादितरेषां मूलनिरोधादूर्द्ध्वगतित्वेन जले महानद्यादौ महति कर्दमे तीक्ष्णेषु कण्टकेषु वा न मज्जति इति, लघुत्वात्तूलपिण्डवज्जलादौ मज्जितेऽप्युद्गच्छतीत्यर्थः॥ ४०॥

सिद्ध्यन्तरमाह—

**समानजयात् प्रज्वलनम्॥ ४१॥**

अग्निमावेष्ट्य व्यवस्थितस्य समानाख्यस्य वायोर्जयात् संयमेन वशीकारात् निरावरणस्याग्नेरूर्द्ध्वत्वात्तेजसा प्रज्वलन्निव योगी प्रतिभाति॥ ४१॥

सिद्ध्यन्तरमाह—

**श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम्॥ ४२॥**

श्रोत्रं शब्दग्राहकमाहङ्कारिकमिन्द्रियम्, आकाशं व्योम, शब्दतन्मात्रकार्य्यं, तयोः सम्बन्धो देश-देशिभावलक्षणः, तस्मिन् कृतसंयमस्य योगिनो दिव्यं श्रोत्रं प्रवर्त्तते, युगपत् सूक्ष्म-व्यवहित-विप्रकृष्टशब्दग्रहणसमर्थं भवतीत्यर्थः॥ ४२॥

सिद्ध्यन्तरमाह—

## कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥ ४३ ॥

कायः पाञ्चभौतिकं शरीरं, तस्याकाशेनावकाशदायकेन,यः सम्बन्धस्तत्र संयमं विधाय लघुनि तूलादौ समापत्तिं तन्मयीभावलक्षणां विधाय प्राप्ततिलघुभावो योगी प्रथमं यथारुचि जले सञ्चरणक्रमेण ऊर्णनाभतन्तुजालेन सञ्चरमाणः आदित्यरश्मिभिश्च विहरन् यथेष्टमाकाशेन गच्छति ॥ ४३ ॥

सिद्ध्यन्तरमाह—

## वहिरकल्पिता वृत्तिर्महाविदेहा, ततः प्रकाशावरणक्षयः ॥ ४४ ॥

शरीराद्वहिर्या मनसः शरीरनैरपेक्ष्येण वृत्तिः, सा महाविदेहा नाम विगताहङ्कारकार्य्यवेगा उच्यते। ततस्तस्यां कृतात् संयमात्, प्रकाशावरणक्षयः, सात्विकस्य चित्तस्य यः प्रकाशः, तस्य यदावरणं क्लेशकर्मादि, तस्य क्षयः प्रविलयो भवति। अयमर्थः,—शरीराहङ्कारे सति या मनसो वहिर्वृत्तिः सा कल्पिता इत्युच्यते। यदा पुनः शरीरादहङ्कारभावं परित्यज्य स्वातन्त्र्येण मनसो वृत्तिः सा अकल्पिता, तस्यां संयमात् योगिनः सर्वे चित्तमलाः क्षीयन्ते ॥ ४४ ॥

तदेवं पूर्वान्तविषया अपरान्तविषया मध्यभावाश्च सिद्धीः प्रतिपाद्य अनन्तरं भुवनज्ञानादिरूपा वाह्याः, कायव्यूहादिरूपा आभ्यन्तराः, परिकर्मनिष्पन्नभूताश्च मैत्र्यादिषु बलानीत्येवमाद्याः समाध्युपयोगिनीश्चान्तःकरण-वहिःकरणलक्षणेन्द्रियभावाः, प्राणादिवायुभावाश्च सिद्धीश्चित्तदार्ढ्याय समाधेश्चाश्वासोत्पत्तये प्रतिपाद्य इदानीं स्वदर्शनोपयोगि सवीजनिर्वीजसमाधिसिद्धये विविधोपायप्रदर्शनायाह—

## स्थूल-स्वरूप-सूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥४५॥

पञ्चानां पृथिव्यादीनां भूतानां ये पञ्च अवस्थाविशेषरूपा धर्माः

स्थूलत्वादयः, तत्र कृतसंयमस्य भूतजयो भवति, भूतानि अस्य वश्यानि भवन्तीत्यर्थः । तथा हि, भूतानां परिदृश्यमानं विशिष्टाकारवत् स्थूल-रूपम् ; स्वरूपञ्चैषां यथाक्रमं कार्य्यं गन्ध-स्नेहोष्णता-प्रेरणावकाशदान-लक्षणम् ; सूक्ष्मञ्च यथाक्रमं भूतानां कारणभेदेन व्यवस्थितानि गन्धादि-तन्मात्राणि ; अन्वयिनो गुणाः प्रकाश-प्रवृत्ति-स्थितिरूपतया सर्व्वत्रैव अन्वयित्वेन समुपलभ्यन्ते ; अर्थवत्त्वं तेषु एव गुणेषु भोगापवर्गसम्पादनाख्या शक्तिः ; तदेवं भूतेषु पञ्चसु उक्तधर्म-लक्षणावस्थाभिन्नेषु प्रत्यवस्थं संयमं कुर्व्वन् योगी भूतजयो भवति । तद्यथा—प्रथमं स्थूलरूपे संयमं विधाय तदनु सूक्ष्मरूपे, इत्येवं-क्रमेण तस्य कृतसंयमस्य सङ्कल्पार्थविधायिन्यो वत्सानुसारिण्य इव गावो भूतप्रकृतयो भवन्तीत्यर्थः ॥ ४५ ॥

तस्यैव भूतजयस्य फलमाह—

## ततोऽणिमादिप्रादुर्भावः कायसम्पत् तद्धर्मा-नभिघातश्च ॥ ४६ ॥

अणिमा परमाणुरूपताऽऽपत्तिः, महिमा महत्त्वं, लघिमा लघुत्वं, तूलपिण्डवल्लघुत्वप्राप्तिः, गरिमा गुरुत्वप्राप्तिः, अङ्गुल्यग्रेण चन्द्रादि-स्पर्शनशक्तिः प्राकाम्यम् इच्छाऽनभिघातः, शरीरान्तःकरणेश्वरत्वम् ईशित्वं, सर्व्वत्र प्रभविष्णुता वशित्वं, सर्वाण्येव भूतानि अनुगामित्वात्तदुक्तं नातिक्रामन्ति । यत्र कामावसायी यस्मिन् विषयेऽस्य कामः स्वेच्छा भवति, तस्मिन् विषये योगिनः अध्यवसायो भवति तं विषयं स्वीकारद्वारे-णाभिलाषसमाप्तिपर्य्यन्तं नयतीत्यर्थः ; त एते अणिमाद्याः समाध्युप-योगिनो भूतजयात् योगिनः प्रादुर्भवन्ति ; यथा—परमाणुत्वं प्राप्तो वज्रादीनामप्यन्तः प्रविशति ; एवं सर्व्वत्र योज्यम् । एतेऽणिमादयोऽष्टौ गुणा महासिद्धय उच्यन्ते ।* कायसम्पत् वक्ष्यमाणा, तां प्राप्नोति । तद्धर्मानभि-

---

* अणिमाद्यष्टैश्वर्य्यव्याख्याने वृत्तिकारेणानेन प्राप्तिनामकैश्वर्य्यस्य ग्रहण-मकृत्वा गरिमाख्येण ऐश्वर्य्येण अष्टसङ्ख्यात्वं पूरितम् । भाष्यकारेण तु प्राप्तेरेव ग्रहणं कृतं, न तु गरिम्णः । मणिप्रभाकारेण तु गरिम्णस्तथा प्राप्तेरुभयोरेव ग्रहणं कृतं, परन्तु "यत्र कामावसायिता" इत्याख्यस्योल्लेखो न कृतः ; परन्तु भाष्यमणिप्रभयोः प्राप्तेर्लक्षणं कृतं, वृत्तिकारेण तत्प्राकाम्यस्य लक्षणत्वेनाभिहितमिति सुधीभिर्द्रष्टव्यम् ।

घातश्च तस्य कायस्य, ये धर्मा रूपादयः, तेषामनभिघातो नाशो न कुतश्चित् भवति, नास्य रूपमग्निर्दहति, न वायुः शोषयतीत्यादि योज्यम् ॥ ४६ ॥

कायसम्पदमाह—

**रूप-लावण्य-बल-वज्रसंहननत्वानि कायसम्पत् ॥ ४७ ॥**

रूप-लावण्य-बलानि प्रसिद्धानि, वज्रसंहननत्वं वज्रवत् कठिना संहतिरस्य शरीरे भवति इत्यर्थः, इति कायस्य आविर्भूतगुणसम्पत् ॥ ४७ ॥

एवं भूतजयमभिधाय प्राप्तभूमिकायामिन्द्रियजयमाह—

**ग्रहण-स्वरूपास्मिताऽन्वयार्थवत्त्वसंयमात्**

**इन्द्रियजयः ॥ ४८ ॥**

ग्रहणमिन्द्रियाणां विषयाभिमुखी वृत्तिः, स्वरूपं सामान्येन प्रकाशकत्वम्, अस्मिता अहङ्कारानुगमः, अन्वयार्थवत्त्वे पूर्ववत्; एतेषाम् इन्द्रियाणामवस्थापञ्चके पूर्ववत् संयमं कृत्वा इन्द्रियजयी भवति ॥ ४ ॥

तस्य फलमाह—

**ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४९ ॥**

शरीरस्य मनोवदनुत्तम-गतिलाभो मनोजवित्वम्; कायनिरपेक्षाणाम् इन्द्रियाणां वृत्तिलाभो विकरणभावः; सर्ववशित्वं प्रधानजयः; एताः सिद्धयो जितेन्द्रियस्य प्रादुर्भवन्ति; ताश्चास्मिन् शास्त्रे मधुप्रतीका इत्युच्यन्ते; यथा मधुन एकदेशोऽपि स्वदते, एवं प्रत्येकमेताः सिद्धयः स्वदन्ते इति मधुप्रतीकाः ॥ ४९ ॥

इन्द्रियजयमभिधाय अन्तःकरणजयमाह—

**सत्त्व-पुरुषान्यताख्यातिमात्रस्य सर्वभावाधि-**

**ष्ठातृत्वं सर्वज्ञातृत्वञ्च ॥ ५० ॥**

तस्मिन् बुद्धेः सात्त्विके परिणामे कृतसंयमस्य या सत्त्व-पुरुषयोरुत्पद्यते सा अन्यताख्यातिः। गुणानां कर्तृत्वाभिमान-शिथिलीभावरूपात्

तन्माहात्म्यात् तत्रैव स्थितस्य योगिनः सर्वाधिष्ठातृत्वं सर्वकर्तृत्वं च समाधेर्भवति। सर्वेषां गुणपरिणामानां भावानां स्वामिवदाक्रमणं सर्वाधिष्ठातृत्वम्; तेषामेव च शान्तोदिता-व्यपदेश्यधर्मित्वेनावस्थितानां यथावत् विवेकज्ञानं सर्वज्ञातृत्वमेव। एषाच्चास्मिन् शास्त्रेऽपरस्यां वशीकारसंज्ञायां प्राप्तायां विशोका नाम सिद्धिरित्युच्यते ॥ ५० ॥

क्रमेण भूमिकान्तरमाह—

## तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ५१ ॥

तस्यामपि विशोकायां सिद्धौ यदा वैराग्यमुत्पद्यते योगिनस्तदा तस्माद्दोषाणां रागादीनां, यद्बीजमविद्यादयः, तस्य क्षये निर्मूलने, कैवल्यमात्यन्तिकी दुःखनिवृत्तिः, पुरुषस्य गुणानामधिकारपरिसमाप्तौ स्वरूपनिष्ठत्वम् ॥ ५१ ॥

तस्मिन्नेव समाधौ स्थित्युपायमाह—

## स्थान्युपनिमन्त्रणे सङ्ग-स्मयाकरणं पुनरनिष्ट-प्रसङ्गात् ॥ ५२ ॥

चत्वारो योगिनो भवन्ति; तत्राभ्यासवान् प्रवृत्तमात्रज्योतिः प्रथमः। ऋतम्भरप्रज्ञो द्वितीयः। भूतेन्द्रियजयी तृतीयः। अतिक्रान्तभावनीयश्चतुर्थः। तस्य चतुर्थस्य समाधेः प्राप्तसप्तविधभूमिप्रत्ययस्यान्त्यां मधुमतीसंज्ञां भूमिकां साक्षात्कुर्वतः स्थानिनो देवा उपनिमन्त्रणे उपनिमन्त्रयितारो भवन्ति, दिव्यस्त्री-वसनादिकमुपढौकयन्तीति तस्मिन् उपनिमन्त्रणे न अनेन सङ्गः कर्त्तव्यः, नापि स्मयः; सङ्गतिकरणे पुनर्विषयभोगे पतति, स्मयकरणे कृतकृत्यमात्मानं मन्यमानो न समाधौ उत्साहः; अतः सङ्ग-स्मययोस्तेन वर्जनं कर्त्तव्यम् ॥ ५२ ॥

अस्यामेव फलभूतायां विवेकख्यातौ पूर्वोक्तसंयमव्यतिरिक्तमुपायान्तरमाह—

## क्षण-तत्क्रमयोः संयमाद्विवेकज्ञानम् ॥ ५३ ॥

क्षणः सर्वान्त्यकालावयवः, यस्य कलाः प्रभवितुं न शक्यन्ते, तथा-

विधानां कालक्षणानां यः क्रमः पौर्वापर्य्येण परिणामः, ततः संयमात् प्रागुक्तं विवेकज्ञानमुत्पद्यते। अयमर्थः,—अयं कालक्षणोऽमुष्मात् कालक्षणादुत्तरः, अयमस्मात् पूर्वः, इत्येवंविधे क्रमे कृतसंयमस्यात्यन्तसूक्ष्मेऽपि क्षणक्रमे यदा भवति साक्षात्कारः, तदा अन्यदपि सूक्ष्मं महदादिसाक्षात्कार इति विवेकज्ञानोत्पत्तिः ॥ ५३ ॥

अस्यैव संयमस्य विषयविवेकोपिक्षणमाह—

## जाति-लक्षण-देशैरन्यताऽनवच्छेदात् तुल्ययोस्ततः प्रतिपत्तिः ॥ ५४ ॥

पदार्थानां भेदहेतवो जाति-लक्षण-देशा भवन्ति। क्वचिद्भेदहेतुर्जातिः, यथा—गौरियं, महिषोऽयमिति, जात्या तुल्ययोर्लक्षणं भेदहेतुः, इयं कर्बुरा, इयम् अरुणेति। जात्या लक्षणेनाभिन्नयोर्भेदहेतुर्देशो द्रष्टव्यः ; यथा—तुल्यप्रमाणयोरामलकयोर्भिन्नदेशस्थितयोर्यत्र पुनर्भेदोऽवधारयितुं न शक्यते, यथा—एकदेशस्थितयोः शुक्लयोः पार्थिवयोः परमाण्वोः, तथाविधविषये भेदाय कृतसंयमस्य भेदेन ज्ञानमुत्पद्यते ; तत् अभ्यासात् सूक्ष्माण्यपि तत्त्वानि भेदेन प्रतिपद्यन्ते। एतदुक्तं भवति - यत्र केनचिदुपायेन भेदो नावधारयितुं शक्यः, तत्र संयमाद्भवत्येव भेदप्रतिपत्तिः ॥ ५४ ॥

सूक्ष्माणां तत्त्वानामुक्तस्य विवेकजन्मज्ञानस्य संज्ञां विषयस्वाभाव्यं व्याख्यातुमाह—

## तारकं सर्वविषयं सर्वथा-विषयमक्रमञ्चेति विवेकजं ज्ञानम् ॥ ५५ ॥

उक्तसंयमबलादेव अन्त्यायां भूमिकायामुत्पन्नं ज्ञानं तारकमिति, तारयति अगाधात् संसारसागरात् योगिनम् इत्यन्वर्थिक्या संज्ञया तारकमित्युच्यते। अस्य विषयमाह, सर्वविषयमिति—सर्वाणि तत्त्वानि महदादीनि विषयोऽस्येति सर्वविषयम्। स्वभावाश्च अस्य सर्वथा विषयत्वं सर्वाभिरवस्थाभिः स्थूल-सूक्ष्मादिभेदेन तैस्तैः परिणामैः सर्वेण प्रकारेण अवस्थितानि तत्त्वानि विषयोऽस्येति सर्वथाविषयम्। स्वभावान्तरमाह,

Nature of कैवल्य



अक्रमञ्चेति—निःशेषनानाऽवस्थापरिणतद्विवेकभावग्रहणं नास्य क्रमो विद्यते इति अक्रमं सर्वं करतलामलकवत् युगपत् पश्यतीत्यर्थः ॥ ५५ ॥

अस्माच्च विवेकजात् तारकाख्यात् ज्ञानात् किं भवति ? इत्याह—

**सत्त्व-पुरुषयोः शुद्धिसाम्ये कैवल्यम् ॥ ५६ ॥**

सत्त्व-पुरुषावुक्तलक्षणौ, तयोः शुद्धिसाम्यं सत्त्वस्य सर्वकर्तृत्वाभिमान-निवृत्त्या स्वकारणानुप्रवेशः शुद्धिः, पुरुषस्य शुद्धिरुपचरितभोगाभावः, इति द्वयोः समानायां शुद्धौ पुरुषस्य कैवल्यमुत्पद्यते, मोक्षो भवतीत्यर्थः ॥ ५६ ॥

तदेवमन्तरङ्गं योगाङ्गत्रयमभिधाय, तस्य च संयमसंज्ञां कृत्वा, संयमस्य विषयप्रदर्शनार्थं परिणामत्रयमुपपाद्य, संयमबलोत्पद्यमानाः पूर्वान्त-परान्त-मध्यभवाः सिद्धीरुपदर्श्य, समाध्यभ्यासोपपत्तये बाह्या भुवन-ज्ञानादिरूपा आभ्यन्तराश्च कायव्यूहज्ञानादिरूपाः प्रदर्श्य, समाध्युपयोगाय इन्द्रियप्राणजयादिपूर्विकाः प्रदर्श्य, परमपुरुषार्थसिद्धये यथाक्रममवस्था-सहितभूतजयेन्द्रियसत्त्वजयोद्भवाश्च व्याख्याय, विवेकज्ञानोपपत्तये तांस्तानुपायानुपन्यस्य, तारकस्य सर्वसमाध्यवस्थापर्यन्तभवस्य स्वरूपमभिधाय, तत्समापत्तेः कृताधिकारस्य चित्तसत्त्वस्य स्वकारणानुप्रवेशात् कैवल्यमुत्पद्यते इत्यभिहितम् ।

निर्णीतो विभूतिपादस्तृतीयः ।

इति महाराजभोजदेवविरचितायां राजमार्त्तण्डाभिधायां पातञ्जलवृत्तौ विभूतिपादस्तृतीयः ।

—०  ०—

# अथ कैवल्यपादः ।

यदाज्ञयैव कैवल्यं विनोपायैः प्रजायते ।
तमेकमजमीशानं चिदानन्दमयं स्तुमः ॥

इदानीं विप्रतिपत्तिसमुत्थभ्रान्तिनिराकरणेन युक्त्या कैवल्यस्वरूप-ज्ञानाय कैवल्यपादोऽयमारभ्यते ।

तत्र याः पूर्वमुक्ताः सिद्धयस्तासां नानाविधजन्मादिकारणप्रतिपादन-द्वारेणैवं बोधयन्ति—मदीया एताः सिद्धयः ताः सर्वाः पूर्वजन्माभ्यस्त-समाधिबलात् जन्मादिनिमित्तमात्रेणाश्रित्य प्रवर्त्तन्ते। ततश्चानेक-भवसाध्यस्य समाधेर्न क्षतिरस्तीत्याश्वासोत्पादनाय समाधिसिद्धेश्च प्राधान्य-ख्यापनार्थं कैवल्योपयोगार्थमाह—

## जन्मौषधि-मन्त्र-तपः-समाधिजाः सिद्धयः ॥ १ ॥

काश्चन जन्मनिमित्ता एव सिद्धयः; यथा—पक्ष्यादीनामाकाश-गमनादयः; यथा वा—कपिलमहर्षिप्रभृतीनां जन्मसमनन्तरमेवोपजाय-माना ज्ञानादयः सांसिद्धिका गुणाः। औषधिसिद्धयो यथा—पारदादि-रसायनाद्युपयोगात्। मन्त्रसिद्धिर्यथा—मन्त्रजपात् केषाञ्चिदाकाश-गमनादिः। तपःसिद्धिर्यथा—विश्वामित्रादीनाम्। समाधिसिद्धिः प्राक् प्रतिपादिता। एताः सिद्धयः पूर्वजन्मक्षयितक्लेशानामेवोपजायन्ते; तस्मात् समाधिसिद्धाविव अन्यासां सिद्धीनां समाधिरेव जन्मान्तराभ्यस्त-कारणं, मन्त्रादिनित्यनिमित्तमात्राणि ॥ १ ॥

ननु नन्दीश्वरादिकानां जात्यादिपरिणामोऽस्मिन्नेव जन्मनि दृश्यते, तत् कथं जन्मनि जन्मान्तराभ्यस्तस्य समाधेः कारणत्वमुच्यते? इत्या-शङ्क्याह—

## जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥

योऽयमिहैव जन्मनि नन्दीश्वरादीनां जात्यादिपरिणामः, स प्रकृत्या-

पूरात् पाश्चात्या एव हि प्रकृतयोऽमुष्मिन् जन्मनि विकारैरापूरयन्ति जात्यादिद्वारेण परिणमन्ति ॥ २ ॥

ननु धर्माधर्मादयस्तत्र क्रियमाणा उपलभ्यन्ते, तत् कथं प्रकृतीनामापूरकत्वम्? इत्याह—

## निमित्तमप्रयोजकं प्रकृतीनां, वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥

निमित्तं धर्मादि, तत् प्रकृतीनामर्थान्तरपरिणामे न प्रयोजकं, न हि कार्य्येण कारणं प्रवर्त्तते। कुत्र तर्हि तस्य धर्मादेर्व्यापारः? इत्याह— वरणभेदस्तु ततः क्षेत्रिकवत् ततस्तस्मादनुष्ठीयमानात् धर्मात् वरणमावरणकम् अधर्मादि, तस्यैव विरोधित्वात् भेदः क्षयः क्रियते, तस्मिन् प्रतिबन्धे क्षीणे प्रकृतयः स्वयमभिमतकार्य्याय प्रभवन्ति। दृष्टान्तमाह, क्षेत्रिकवत्—यथा क्षेत्रिकः कृषीवलः केदारात् केदारान्तरं जलं निनीषुर्जलप्रतिबन्धकवरणभेदमात्रं करोति, तस्मिन् भिन्ने जलं स्वयमेव प्रसरद्रूपं परिणामं गृह्णाति, न तु जलप्रसरणे तस्य कश्चित् प्रयत्नः; एवं धर्मादिर्बोद्धव्यम् ॥ ३ ॥

यदा साक्षात्कृततत्त्वस्य योगिनो युगपत् कर्मफलभोगाय आत्मीयनिरतिशयविभूत्यनुभवात् युगपदनेकशरीरनिर्मित्सा जायते, तदा कुतः तानि चित्तानि प्रभवन्ति? इत्याह—

## निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

योगिनः स्वयं निर्मितेषु कायेषु यानि चित्तानि तानि मूलकारणात्, अस्मितामात्रादेव तदिच्छया प्रसरन्ति, अग्नेर्विस्फुलिङ्गा इव युगपत् परिणमन्ति ॥ ४ ॥

ननु बहूनां चित्तानां भिन्नाभिप्रायत्वान्नैककार्य्यकर्तृत्वं स्यात्? इत्याह—

## प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥

तेषाम् अनेकेषां चेतसां प्रवृत्तिभेदे व्यापारनानात्वे एकं योगिनश्चित्तं

प्रयोजकं प्रेरकम्, अधिष्ठातृत्वेन, तेन न भिन्नमतत्वम्। अयमर्थः,— यथा आत्मीयशरीरमनश्चक्षुःपाण्यादीनि प्रत्येकं प्रेरयति, अधिष्ठातृत्वेन, एवं कार्यान्तरेष्वपीति॥ ५॥

जन्मादिप्रभवत्वात् सिद्धीनां चित्तमपि तत्प्रभवं पञ्चविधमेव; अतो जन्मादिप्रभवाच्चित्तात् समाधिप्रभवस्य चित्तस्य वैलक्षण्यमाह—

## तत्र ध्यानजमनाशयम्॥ ६॥

ध्यानजं समाधिजं यत् चित्तं तत् पञ्चसु मध्ये अनाशयं कर्मवासना-रहितमित्यर्थः॥ ६॥

यथा इतरचित्तेभ्यो योगिनश्चित्तं विलक्षणं क्लेशादिरहितं, तथा कर्मापि विलक्षणमित्याह—

## कर्माशुक्लाकृष्णं योगिनः, त्रिविधमितरेषाम्॥ ७॥

शुभफलदं कर्म यागादि शुक्लम्, अशुभफलदं ब्रह्महत्यादि कृष्णम्, उभय-सङ्कीर्णं शुक्लकृष्णम्। तत्र शुक्लं कर्म विचक्षणानां दान-तपः-स्वाध्यायादि-मतां पुरुषाणाम्। कृष्णं कर्म दानवानाम्। शुक्लकृष्णं मनुष्याणाम्। योगिनान्तु सन्न्यासवतां त्रिविधं कर्म विपरीतं विलक्षणं, यत् फल-त्यागानुसन्धानेनैवानुष्ठानात् न किञ्चित् फलमारभते॥ ७॥

अस्यैव कर्मणः फलमाह—

## ततस्तद्विपाकानुगुणानामेवाभिव्यक्ति-वासनानाम्॥ ८॥

इह हि द्विविधा कर्मवासनाः, स्मृतिमात्रफलाः जात्यायुर्भोग-फलाश्च। एका अनेकजन्मभवा इत्यनेन पूर्वमेव कृतनिर्णयाः यास्तु स्मृतिमात्रफलाः ताः, ततः कर्मणः, येन कर्मणा यादृक् शरीरमारब्धं देव-मनुष्य-तिर्य्यगादिभेदं, तस्य विपाकस्य, अनुगुणा अनुरूपाः, या वासनाः तासामेवाभिव्यक्तिर्भवति। अयमर्थः,—येन कर्मणा पूर्वं देवतादिशरीर-मारब्धं, जात्यन्तरशतव्यवधानेन पुनस्तथाविधस्यैव शरीरस्य आरम्भे तदनुरूपा एव स्मृतिफला वासनाः प्रकटीभवन्ति, लोकान्तरेष्वेवार्थेषु

तस्य स्मृत्यादयो जायन्ते। इतरास्तु सत्योऽपि अव्यक्तसंज्ञाः तिष्ठन्ति, न तस्यां दशायां नरकादिशरीरोद्भवा वासना व्यक्तिमायान्ति ॥ ८ ॥

आसामेव वासनानां कार्य्यकारणभावानुपपत्तिमाशङ्क्य समर्थयितुमाह—

**जाति-देश-कालव्यवहितानामप्यानन्तर्य्यं, स्मृति-संस्कारयोरेकरूपत्वात् ॥ ९ ॥**

इह नानायोनिषु भ्रमतां संसारिणां काञ्चित् योनिमनुभूय यदा योन्यन्तरसहस्रव्यवधानेन पुनस्तामेव योनिं प्रतिपद्यते, तदा तस्यां पूर्वानुभूतायां योनौ तथाविधशरीरादिव्यञ्जकापेक्षया वासना याः प्रकटीभूता आसन्,तास्तथाविधव्यञ्जकाभावात्तिरोहिताः पुनस्तथाविधव्यञ्जकशरीरादिलाभे प्रकटीभवन्ति ; जाति-देश-कालव्यवधानेऽपि तासां स्वानुभूतस्मृत्यादिफलसाधने आनन्तर्य्यं नैरन्तर्य्यम् ; कुतः ? स्मृति-संस्कारयोरेकरूपत्वात् ; तथा हि, अनुष्ठीयमानात् कर्मणश्चित्तसत्त्वे वासनारूपः संस्कारः समुत्पद्यते, स च स्वर्गनरकादीनां फलानामङ्कुरीभावः, कर्मणां वा यागादीनां शक्तिरूपतया अवस्थानं, कर्त्तुर्वा तथाविधभोग्य-भोक्तृत्वरूपं सामर्थ्यम्। संस्कारात् स्मृतिः, स्मृतेश्च सुख-दुःखोपभोगः, तदनुभवाच्च पुनरपि संस्कार-स्मृत्यादयः। एवं च यस्य स्मृति-संस्कारादयो भिन्नाः, तस्यानन्तर्य्याभावे दुर्लभः कार्य्यकारणभावः ; अस्माकं तु यदाऽनुभव एव संस्कारीभवति, संस्कारश्च स्मृतिरूपतया परिणमति, तदैकस्यैव चित्तस्यानुसन्धातृत्वेन स्थितत्वात् न कार्य्यकारणभावो दुर्घटः ॥ ९ ॥

भवत्वानन्तर्य्यं कार्य्यकारणभावश्च वासनानां, यदा तु प्रथममेवानुभवः प्रवर्त्तते, तदा किं वासनानिमित्तः ? उत निर्निमित्तः ? इति शङ्कां व्यपनेतुमाह—

**तासामनादित्वम्, आशिषो नित्यत्वात् ॥ १० ॥**

तासां वासनानाम्, अनादित्वं न विद्यते आदिर्यस्य तस्य भावस्तत्त्वं, तासामादिर्नास्तीत्यर्थः ; कुत इति ? आशिषो नित्यत्वात्—येयमाशीर्महामोहरूपा, सदैव सुखसाधनानि मे भूयासुः, मा कदाचन तैः मे वियोगोऽभूदिति यः सङ्कल्पविशेषो वासनानां कारणं, तस्य नित्यत्वात्

अनादित्वमित्यर्थः। एतदुक्तं भवति—कारणस्य सन्निहितत्वात् अनुभव-संस्कारादीनां कार्य्याणां प्रवृत्तिः केन वार्य्यते ? अनुभव-संस्कारानु-विद्धं सङ्कोच-विकाशधर्मि चित्तं तत्तदभिव्यञ्जकलाभात् तत्तत्फलरूपतया परिणमत इत्यर्थः ॥ १० ॥

तासामानन्त्यात् हानं कथं भवति ? इत्याशङ्क्य हानोपायमाह—

**हेतु-फलाश्रयालम्बनैः सङ्गृहीतत्वात्, एषामभावे तदभावः ॥ ११ ॥**

वासनानामनन्तरानुभवो हेतुः,तस्याप्यनुभवस्य रागादयः,तेषामविद्येति साक्षात् पारम्पर्य्येण हेतुः ; फलं शरीरादि स्मृत्यादि च ; आश्रयो बुद्धिः ; आलम्बनं यदेवानुभवस्य तदेव वासनानाम् ; अतस्तैर्हेतु-फलाश्रयालम्ब-नैरनन्तानामपि वासनानां सङ्गृहीतत्वात् ; एषां हेतूनाम्, अभावे ज्ञान-योगाभ्यां दग्धबीजकल्पत्वे विहिते निर्मूलत्वाच्च वासनाः प्ररोहं न यान्ति न कार्य्यमारभन्ते इति तासाम् अभावः ॥ ११ ॥

ननु प्रतिक्षणं चित्तस्य नश्वरत्वोपलब्धेर्वासनानां तत्फलानाञ्च कार्य्यकारणभावेन युगपद्भावित्वाद्भेदे कथमेकत्वम् ? इत्याशङ्क्य एकत्व-समर्थनायाह—

**अतीतानागतं स्वरूपतो नास्ति, अध्वभेदात् धर्माणाम् ॥ १२ ॥**

इह अत्यन्तमसतां भावानामुत्पत्तिर्न युक्तिमती, तेषां सत्त्वसम्बन्ध-योगात् ; न हि शशविषाणादीनां क्वचिदपि सत्त्वसम्बन्धो दृष्टः, निरुपाख्ये च कार्य्ये किमुद्दिश्य कारणानि प्रवर्त्तन्ते ? न ह्यसन्तं विषयमालोच्य कश्चित् प्रवर्त्तते। सतामपि विरोधान्नाभावसम्बन्धोऽस्ति, यत् स्वरूपं लब्धसत्ताकं तत् कथं निरुपाख्यतामभावरूपतां वा भजते ? न विरुद्धं रूपं स्वीकरोतीत्यर्थः ; तस्मात् सतां नाशासम्भवात्, असतां च उत्पत्ति-सम्भवात्तैस्तैर्धर्मैर्विपरिणममानो धर्मी सदैकरूप एवावतिष्ठते, धर्मास्तु अधिकत्वेन त्रैकालिकत्वेन तत्र व्यवस्थिताः स्वस्मिन्नध्वनि व्यवस्थिता न स्वरूपं त्यजन्ति, वर्त्तमानेऽध्वनि व्यवस्थिताः केवलं भोग्यतां भजन्ते ;

तस्माद्धर्माणामतीतानागतादिभेदात्तेनैव रूपेण कार्य्य-कारणभावोऽस्मिन् दर्शने प्रतिपद्यते ; तस्मादपवर्गपर्य्यन्तमेकमेव चित्तं धर्मितयाऽनुवर्त्तमानं न निह्नोतुं पार्य्यते ॥ १२ ॥

ते एते धर्म-धर्मिणः किं-रूपाः ? इत्याह—

**ते व्यक्त-सूक्ष्मगुणात्मानः ॥ १३ ॥**

ये एते धर्म-धर्मिणः प्रोक्ताः, ते व्यक्त-सूक्ष्मभेदेन व्यवस्थिताः गुणाः सत्त्व-रजस्तमोरूपाः, तदात्मानस्तत्स्वभावाः,तत्परिणामरूपा इत्यर्थः ; यतः सत्त्व-रजस्तमोभिः सुख-दुःख-मोहरूपैः सर्वासां वाह्याभ्यन्तरभेदभिन्नानां भावव्यक्तीनाम् अन्वयानुगमा दृश्यन्ते, यदन्वयि तत्तत् परिणामिरूपं दृष्टं, यथा घटादयो मृदन्विता मृत्परिणामरूपाः ॥ १३ ॥

यद्येते त्रयो गुणाः सर्वत्र मूलकारणं, कथमेकधर्मीति व्यपदेशः ? इत्याशङ्क्याह—

**परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥**

यद्यपि त्रयो गुणाः, तथाऽपि तेषामङ्गाङ्गिभावगमनलक्षणो यः परिणामः क्वचित् सत्त्वमङ्गि क्वचिद्रजः क्वचिच्च तम इत्येवंरूपः, तस्यैकत्वाद्वस्तु-तत्त्वमेकमुच्यते ; यथा—इयं पृथिवी अयं वायुरित्येवमादि ॥ १४ ॥

ननु ज्ञानस्य व्यतिरिक्ते सत्यर्थे वस्त्वेकमनेकं वा वक्तुं युज्यते, यदा च विज्ञानमेव वासनावशात् कार्य्यकारणभावेनावस्थितं तथा तथा प्रतिभाति, तदा कथमेतच्छक्यते वक्तुम् ? इत्याशङ्क्याह—

**वस्तुसाम्ये चित्तभेदात्तयोर्विविक्तः पन्थाः ॥ १५ ॥ ***

तयोर्ज्ञानार्थयोर्विविक्तः पन्था विविक्तो मार्गः, देश इति यावत् ; कथम् ? वस्तुसाम्ये चित्तभेदात् समाने वस्तुनि स्त्र्यादावुपलभ्यमाने लावण्यादौ नानाप्रमातॄणां चित्तस्य भेदः सुख-दुःख-मोहरूपतया समुपलभ्यते ; तथा हि, एकस्यां रूपलावण्यवत्यां योषिति उपलभ्यमानायां सरागस्य सुखमुत्पद्यते, सपत्न्यास्तद्द्वेषः, परिव्राजकादेर्घृणा इत्येकस्मिन् वस्तुनि नानाविधोदयात् कथञ्चित् न कार्य्यत्वं वस्तुनः, एकचित्तकार्य्यत्वे

* एतत्सूत्रादनन्तरं व्यासभाष्ये मणिप्रभायाञ्च "न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात्" इत्यधिकं सूत्रं विद्यते।

वस्त्वेकस्वरूपतयैवावभासते ; किञ्च, चित्तकार्य्यत्वे वस्तुनो यदीयस्य चित्तस्य तद्वस्तु कार्य्यं, तस्मिन्नर्थान्तरव्यासक्ते तद्वस्तु न किञ्चित् स्यात्, भवत्विति चेन्न, तदेव कथमन्यैर्बहुभिरुपलभ्यते ? उपलभ्यते च, तस्मान्न चित्तकार्य्यम् ; अथ युगपत् बहुभिः सोऽर्थः क्रियते, तदा बहुनिर्मितस्यार्थस्यैकनिर्मितात् वैलक्षण्यं स्यात् । यदा तु वैलक्षण्यं नेष्यते, तदा कारणभेदे कार्य्य-भेदस्याभावे निर्हेतुकमेकरूपं वा जगत् स्यात् । एतदुक्तं भवति—सत्यपि भिन्ने कारणे यदि कार्य्यस्याभेदः, तदा समग्रं जगत् नानाविधकारण-जन्यमेकरूपं स्यात्, कारणभेदाननुगमात् स्वातन्त्र्येण निर्हेतुकं वा स्यात् ; यद्येवं, कथं तेन त्रिगुणात्मना चित्तेनैकस्यैव प्रमातुः सुख-दुःख-मोहमयानि ज्ञानानि जन्यन्ते ? मैवम् ; यथा अर्थस्त्रिगुणः, तथा चित्तमपि त्रिगुणं, तस्यार्थप्रतिभासोत्पत्तौ धर्मादयः सहकारिकारणं, तदुद्भवाभिभव-वशात् कदाचित् चित्तस्य तेन तेन रूपेणाभिव्यक्तिः ; तथा च, कामुकस्य सन्निहितायां योषिति धर्मसहकृतं चित्तं सत्त्वस्याङ्गितया परिणममानं सुखमयं भवति ; तदेव अधर्मसहकारि रजसोऽङ्गितया दुःखरूपं सपत्नीमात्रस्य भवति ; तीव्राधर्मसहकारितया तमसोऽङ्गित्वेन कोप-नायाः सपत्न्या मोहमयं भवति ; तस्माद्विज्ञानस्य व्यतिरेकेणास्ति ग्राह्यार्थः । तदेवं विज्ञानार्थयोस्तादात्म्यविरोधान्न कार्य्यकारणभावः, कारणभेदे सत्यपि कार्य्यस्य भेदेऽतिप्रसङ्गादिति ज्ञानाद्व्यतिरिक्तत्व-मर्थस्य व्यवस्थितम् ॥ १५ ॥

यद्येवं, ज्ञानञ्चेत् प्रकाशकत्वात् ग्रहणस्वभावम्, अर्थश्च ग्राह्यस्वभावः, तदा युगपत् सर्वानर्थान् कथं न गृह्णाति ? न स्मरति च ? इत्याशङ्कां परिहर्त्तुमाह—

**तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥१६॥**

तस्यार्थस्य, उपरागादाकारसमर्पणात् चित्ते बाह्यं वस्तु ज्ञातमज्ञातञ्च भवति । अयमर्थः,—सर्वः पदार्थः आत्मलाभे चित्तं सामग्रीमपेक्षते ; नीलादिज्ञानञ्चोपजायमानमिन्द्रियप्रणालिकया समागतमर्थोपरागं सह-कारिकारणत्वेनापेक्षते ; व्यतिरिक्तस्यार्थस्य सम्बन्धाभावात् गृहीतुम-शक्यत्वात् ; ततश्च येनैवार्थेनास्य स्वरूपोपरागः कृतः, तमेवार्थं तज्ज्ञानं

व्यवहारयोग्यतां जनयति ; ततः सोऽर्थः ज्ञात उच्यते ; येन चाकारो न समर्पितः, स न ज्ञातत्वेन व्यवह्रियते, यस्मिंश्चानुभूतेऽर्थे सादृश्यादि-र्थः संस्कारमुद्बोधयन् सहकारितां प्रतिपद्यते, तस्मिन्नेवार्थे स्मृतिरुप-जायते इति न सर्वत्र ज्ञानं नापि स्मृतिरिति न कश्चिद्विरोधः ॥ १६ ॥

यद्येवं, प्रमाताऽपि पुरुषो यस्मिन् काले नीलं वेदयते, तस्मिन् काले पीतादिमतश्चित्तसत्त्वस्यापि कदाचित् गृहीतरूपत्वादाकारग्रहणे परि-णामित्वं प्राप्तम् ? इत्याशङ्कां परिहर्तुमाह—

## सदा ज्ञाताश्चित्तवृत्तयः, तत्प्रभोः पुरुषस्या-परिणामित्वात् ॥ १७ ॥

या एताश्चित्तस्य प्रमाण-विपर्य्ययादिरूपा वृत्तयः, तास्तत्प्रभोश्चित्तस्य ग्रहीतुः पुरुषस्य सदा सर्वकालमेव ज्ञाताः तस्य चिद्रूपतयाऽपरिणामित्वात् परिणामित्वाभावादित्यर्थः। यद्यसौ परिणामी स्यात् तदा परिणामस्य कादाचित्कत्वात् तासां चित्तवृत्तीनां सदा ज्ञातत्वं नोपपद्येत। अयमर्थः,—पुरुषस्य चिद्रूपस्य सदैवाधिष्ठातृत्वेन व्यवस्थितस्य यदन्तरङ्गं निर्मलसत्त्वं, तस्यापि सदैवावस्थितत्वात् येनार्थेनोपरक्तं भवति तथाविध-स्यार्थस्य सदैव चिच्छायासङ्क्रान्तिसद्भावः, तस्यां सत्यां ज्ञातत्वमिति न कदाचित् क्वचित् परिणामित्वाशङ्का ॥ १७ ॥

ननु चित्तमेव यदि सत्त्वोत्कर्षात् प्रकाशकं, तदा स्व-परप्रकाशरूप-त्वादात्मानमर्थञ्च प्रकाशयतीति तावतैव व्यवहारसमाप्तिः, किं ग्रही-त्रन्तरेण ? इत्याशङ्कामपनेतुमाह—

## न तत् स्वाभासं, दृश्यत्वात् ॥ १८ ॥

तच्चित्तं स्वाभासं स्वप्रकाशकं न भवति, पुरुषवेद्यं भवतीति यावत् ; कुतः ? दृश्यत्वात्, यत् किल दृश्यं तत् द्रष्टृवेद्यं दृष्टं, यथा घटादि। दृश्यञ्च चित्तं, तस्मान्न स्वाभासम् ॥ १८ ॥

ननु साध्याविशिष्टोऽयं हेतुः, दृश्यत्वमेव चित्तस्यासिद्धं ; किञ्च, स्वबुद्धिसंवेदनद्वारेण हिताहितप्राप्ति-परिहाररूपा वृत्तयो दृश्यन्ते ;

तथा हि, क्रुद्धोऽहम्, भीतोऽहम्, अत्र मे राग इत्येवमाद्या संवित् बुद्धेरसंवेदने नोपपद्येत ? इत्याशङ्कामपनेतुमाह—

## एकसमये चोभयानवधारणात् ॥ १९ ॥

अर्थस्य संवित्तिः इदन्तया व्यवहारयोग्यताऽऽपादनम् । अयमर्थः,—सुखहेतुर्दुःखहेतुर्वेति बुद्धेः संवित् अहमित्येवमाकारेण सुख दुःखरूपतया व्यवहारक्षमताऽऽपादनम् ; एवंविधञ्च व्यापारद्वयमर्थप्रत्यक्षकाले न युगपत् कर्त्तुं शक्यं, विरोधात् ; न हि विरुद्धयोर्व्यापारयोर्युगपत् सम्भवोऽस्ति ; अत एकस्मिन् काले उभयस्य स्वरूपस्य अर्थस्य चावधारयितुमशक्यत्वात् न चित्तं स्वप्रकाशकं भवति । किन्तु एवंविधव्यापारद्वयं निष्पाद्य फलद्वयस्यासंवेदनाद्बहिर्मुखतयैव स्वनिष्ठत्वेन चित्तस्य स्वयं वेदनाद्दर्थ-निष्ठमेव फलं, न स्वनिष्ठमित्यर्थः ॥ १९ ॥

ननु मा भूत् बुद्धेः स्वयं ग्रहणं, बुद्ध्यन्तरेण भविष्यति ? इत्या-शङ्क्याह—

## चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥ २० ॥

यदि हि बुद्धिर्बुद्ध्यन्तरेण वेद्यते, साऽपि बुद्धिः स्वयमेव स्वीयभाव-रूपमज्ञात्वा अबुद्धा बुद्ध्यन्तरं प्रकाशयितुमसमर्थेति तस्या ग्राहकं बुद्ध्यन्तरं कल्पनीयम् । स्मृतिसङ्करश्च—तस्या अप्यन्यदित्यनवस्थानात् पुरु-षान्तरेणाप्यप्रतीतिर्न स्यात् ; न हि प्रतीतौ अप्रतीतायामर्थः प्रतीतो भवति स्मृतिसङ्करश्च प्राप्नोति, रूपे रसे समुत्पन्नायां बुद्धौ तद्ग्राहिका-णामनन्तानां बुद्धीनां समुत्पत्तेर्बुद्धिजनितैः संस्कारैर्यदा युगपत् बह्व्यः स्मृतयः क्रियन्ते, तदा बुद्धेरपर्य्यवसानात् बुद्धि-स्मृतीनाञ्च बह्वीनां युगपदुत्पत्तेः कस्मिन्नर्थे स्मृतिरियमुत्पन्नेति ज्ञातुमशक्यत्वात् स्मृतीनां सङ्करः स्यात्, इयं रूपे स्मृतिरियं रसे स्मृतिरिति न ज्ञायते ॥ २० ॥

ननु बुद्धेः स्वप्रकाशत्वाभावे बुद्ध्यन्तरे चासंवेदने कथम् अयं विषय-संवेदनरूपो व्यवहारः ? इत्याशङ्क्य स्वसिद्धान्तमाह—

## चितेरप्रतिसङ्क्रमायास्तदाकारताऽऽपत्तौ बुद्धिसंवेदनम् ॥ २१ ॥

पुरुषश्चिद्रूपत्वाच्चितिः, साऽप्रतिसङ्क्रमा—न विद्यते प्रतिसङ्क्रमोऽन्यत्र गमनं यस्याः सा तथोक्ता, अन्येनासङ्कीर्णेति यावत्। यथा गुणा अङ्गादि-भावलक्षणे परिणामे अङ्गिनं गुणं सङ्क्रामन्ति तद्रूपतामिवापद्यन्ते; यथा वा लोके परमाणवः प्रसरन्तो विषयमारोपयन्ति, नैवं चितिशक्तिः, तस्याः सर्वदैकरूपतया सुप्रतिष्ठितत्वेन व्यवस्थितत्वात्; अतस्तत्सन्निधाने यदा बुद्धिस्तदाकारतामापद्यते चेतनोपजायते, बुद्धिवृत्तिप्रतिसङ्क्रान्ता च यदा चिच्छक्तिः बुद्धिवृत्तिविशिष्टतया संवेद्यते, तदा बुद्धेः स्वस्यात्मना वेदनं संवेदनं भवतीत्यर्थः॥ २१॥

इत्थं स्वसंविदितं चित्तं सर्वानुग्रहणसामर्थ्येन सकलनिर्वाहक्षमं भविष्यतीत्याह—

## द्रष्टृ-दृश्योपरक्तं चित्तं सर्वार्थम्॥ २२॥

द्रष्टा पुरुषः, तेनोपरक्तं तत्सन्निधाने तद्रूपतामिव प्राप्नोति, दृश्योपरक्तं विषयोपरक्तं, गृहीतविषयाकारपरिणामं यदा भवति तदा तदेव चित्तं सर्वार्थग्रहणसमर्थं भवति; यथा निर्मलं स्फटिकदर्पणाद्येव प्रतिबिम्ब-ग्रहणसमर्थम्, एवं रजस्तमोभ्यामनभिभूतं सत्त्वं शुद्धत्वात् चिच्छायाग्रहण-समर्थं भवति, न पुनरशुद्धत्वाद्रजस्तमसी; तत् न्यग्भूतरजस्तमोरूपमङ्गि-तया सत्त्वं निश्चलप्रदीपशिखाकारं सदैकरूपतया परिणममानं चिच्छाया-ग्रहणसामर्थ्यादा-मोक्षप्राप्तेरवतिष्ठते; यथा अयस्कान्तसन्निधाने लोहस्य चलनमाविर्भवति, एवं चिद्रूपपुरुषसन्निधाने सत्त्वस्याभिव्यङ्ग्यमभिव्यज्यते चैतन्यम्; अत एव अस्मिन् द्वे चित्तवृत्ती—नित्योदिता अभिव्यङ्ग्या च; नित्योदिता चिच्छक्तिः पुरुषे तत्सन्निधानादभिव्यक्तमभिव्यङ्ग्यं चैतन्यं सत्त्वम्; अभिव्यङ्ग्या चिच्छक्तिः तदत्यन्तसन्निहितत्वादन्तरङ्गं पुरुषस्य भोग्यतां प्रतिपद्यते; तदेव शान्तब्रह्मवादिभिः साङ्ख्यैः पुरुषस्य परमात्मनोऽधिष्ठेयं कर्मानुरूपं सुख-दुःखभोक्तृतया व्यपदिश्यते। यत्तु अनुद्रिक्तत्वादेकस्यापि गुणस्य कदाचित् कस्यचिदङ्गित्वात् त्रिगुणं प्रतिक्षणं परिणममानं सुख-दुःख-मोहात्मकमनिर्मलं, तत्तस्मिन् कर्मानुरूपे शुद्धे सत्त्वे स्वाकार-समर्पणद्वारेण संवेद्यतामापादयति, तत् सत्त्वमाद्यं चित्तसत्त्वमेवेति प्रतिसङ्क्रान्तचिच्छायमन्यतो गृहीतविषयाकारेण चित्तेन उपढौकित-

साकारं चित्सङ्क्रान्तिबलात् चेतनायमानं वास्तवचैतन्याभावेऽपि सुख-दुःखस्वरूपं भोगमनुभवति, स एव भोगोऽत्यन्तसन्निधानेन विवेका-ग्रहणात् अभोक्तुरपि पुरुषस्य भोग इति व्यपदिश्यते। अनेनैवाभि-प्रायेण विन्ध्यवासिनोक्तं—"सत्त्वतप्यत्वमेव पुरुषतप्यत्वम्" इति। अन्यत्रापि —"बिम्बे प्रतिबिम्बमानच्छायासदृशच्छायोद्भवः प्रतिबिम्बशब्देनोच्यते; एवं सत्त्वेऽपि पौरुषेयचिच्छायासदृशचिदभिव्यक्तिः प्रतिसङ्क्रान्तिशब्दार्थः" इति। ननु प्रतिबिम्बं नाम निर्मलस्य नियतपरिणामस्य निर्मले दृष्टम्; यथा मुखस्य दर्पणे, अत्यन्तनिर्मलस्य व्यापकस्य अपरिणामिनः पुरुषस्य तस्मादत्यन्तनिर्मलात् पुरुषादनिर्मले सत्त्वे कथं प्रतिबिम्बनमुपपद्यते? उच्यते—प्रतिबिम्बनस्य स्वरूपमनवगच्छता भवतेदमभ्यधायि, यैव सत्त्व-गताया अभिव्यङ्ग्यायाश्चिच्छक्तेः पुरुषस्य सान्निध्यादभिव्यक्तिः, सैव प्रति-बिम्बनमुच्यते, यादृशी पुरुषगता चिच्छक्तिस्तच्छायाऽप्यत्राविर्भवति। यदप्युक्तम्, अत्यन्तनिर्मलः पुरुषः कथमनिर्मले सत्त्वे प्रतिसङ्क्रामतीति? तदप्यनैकान्तिकं, नैर्मल्यादपकृष्टेऽपि जलादावादित्यादयः प्रतिसङ्क्रान्ताः समुपलभ्यन्ते। यदप्युक्तम्, अनवच्छिन्नस्य नास्ति प्रतिसङ्क्रान्तिरिति, तदप्ययुक्तं, व्यापकस्याप्याकाशस्य दर्पणादौ प्रतिसङ्क्रान्तिदर्शनात्; एवं सति न काचिदनुपपत्तिः प्रतिबिम्बदर्शनस्य। ननु सात्त्विकपरिणामरूपे बुद्धिसत्त्वे पुरुषसन्निधानादभिव्यङ्ग्यायाश्चिच्छक्तेर्बाह्याकारसङ्क्रान्तौ पुरुषस्य सुख-रूपो भोग इत्युक्तं, तदनुपपन्नं, तदेव चित्तसत्त्वं प्रकृतावपरिणतायां कथं सम्भवति? किमर्थश्च तस्याः परिणामः? अथोच्येत, पुरुषस्यार्थोपभोगसम्पादनं तया कर्त्तव्यम्, अतः पुरुषार्थकर्त्तव्यतयाऽस्या युक्त एव परिणामः? तच्चानुपपन्नं, पुरुषार्थकर्तव्यताया एवानुपपत्तेः; पुरुषार्थो मया कर्त्तव्य एवंविधोऽध्यवसायः पुरुषार्थकर्त्तव्यतोच्यते, जडायाश्च प्रकृतेः कथं प्रथममेवंविधोऽध्यवसायः? अस्ति चेदध्यवसायः, कथं जडत्वम्? अत्रोच्यते—अनुलोम-प्रतिलोमलक्षणपरिणामद्वये सहजं शक्तिद्वयमस्ति, तदेव पुरुषार्थकर्त्तव्यतोच्यते; सा च शक्तिरचेतनाया अपि प्रकृतेः सहजैव। तत्र महदादिमहाभूतपर्य्यन्तोऽस्या वहिर्मुखतयाऽनुलोमः परिणामः, पुनः स्वकारणानुप्रवेशनद्वारेणास्मितान्तः परिणामः प्रति-लोमः। इत्थं पुरुषस्य भोगपरिसमाप्तेः सहजशक्तिद्वयक्षयात् कृतार्था

प्रकृतिर्न पुनः परिणाममारभते ; एवंविधायाञ्च पुरुषार्थकर्त्तव्यतायां जड़ाया अपि प्रकृतेर्न काचिदनुपपत्तिः। ननु यदि ईदृशी शक्तिः सहजैव प्रधानस्यास्ति, तत् किमर्थं मोक्षार्थिभिर्मोक्षाय यत्नः क्रियते ? मोक्षस्य चानर्थनीयत्वे तदुपदेशकशास्त्रस्यानर्थक्यं स्यात् ? उच्यते—योऽयं प्रकृति-पुरुषयोरनादिर्भोग्य-भोक्तृत्वलक्षणः सम्बन्धः, तस्मिन् सति व्यक्तचेतनायाः प्रकृतेः कर्त्तृत्वाभिमानात् दुःखानुभवे सति कथमियं दुःखनिवृत्ति-रात्यन्तिकी मम स्यात् ? इति भवत्येवाध्यवसायः ; अतो दुःखनिवृत्त्युपायोप-देशकशास्त्रोपदेशापेक्षा अस्त्येव प्रधानस्य ; तथाभूतमेव कर्मानुरूपबुद्धिसत्त्वं शास्त्रोपदेशस्य विषयः, दर्शनान्तरेष्वप्येवंविध एवाविद्यास्वभावः शास्त्रे-ऽधिक्रियते ; स च मोक्षाय प्रयतमान एवंविधशास्त्रोपदेशं सहकारिण-मपेक्ष्य मोक्षाख्यं फलमासादयति। सर्वाण्येव कार्य्याणि प्राप्तायां सामग्र्या-मात्मा' लभन्ते, अस्य प्रतिलोमपरिणामेनोत्पाद्यस्य मोक्षाख्यस्य कार्य्यस्य ईदृश्येव सामग्री प्रमाणेन निश्चिता,प्रकारान्तरेणानुपपत्तेः ; अतस्तां विना कथं भवितुमर्हति ? अतः स्थितमेतत् सङ्क्रान्तविषयोपरागमभिव्यक्त-चिच्छायं बुद्धिसत्त्वं विषयनिश्चयद्वारेण समग्रां लोकयात्रां निर्वाहयतीति ; एवंविधमेव चित्तं पश्यन्तो भ्रान्ताः स्वसंवेदनचित्तमात्रं जगदित्येवं ब्रुवाणाः प्रतिबोधिता भवन्ति ॥ २२ ॥

ननु यद्येवंविधादेव चित्तात् सकलव्यवहारनिष्पत्तिः, कथं प्रमाण-शून्यो द्रष्टा अभ्युपपद्यते ? इत्याशङ्क्य द्रष्टुः प्रमाणमाह—

**तदसङ्ख्येयवासनाभिश्चित्रमपि परार्थं, संहत्यकारित्वात् ॥ २३ ॥**

तदेव चित्तं सङ्ख्यातुमशक्याभिर्वासनाभिश्चित्रमपि नानारूपमपि परार्थं परस्य स्वामिनो भोक्तुर्भोगापवर्गलक्षणमर्थं साधयतीति ; कुतः ? संहत्यकारित्वात् संहत्य सम्भूय मिलित्वाऽर्थक्रियाकारित्वात् ; यच्च संहत्यार्थक्रियाकारि, तत् परार्थं दृष्टम् ; यथा शयनासनादि। सत्त्व रज-स्तमांसि च चित्तलक्षणपरिणामभाञ्जि संहत्यकारीणि च,अतः परार्थानि। यः परः स पुरुषः। ननु यादृशेन शयनासनादीनां परेण शरीरवता पारार्थ्यमुपलब्धं, तद्दृष्टान्तबलेन तादृश एव परः सिध्यति ; यादृशश्च

भवतां परोऽसंहतरूपोऽभिप्रेतः तद्विपरीतस्य सिद्धेरयमिष्टविघातकृद्धेतुः ? उच्यते—यद्यपि सामान्येन परार्थमात्रे व्याप्तिर्गृहीता, तथाऽपि सत्त्वादिविलक्षणधर्मिपर्य्यालोचनया तद्विलक्षण एव भोक्ता परः सिध्यति ; यथा चेन्धनावृते शिखरिणि विलक्षणाद्धूमाद्वह्निरनुमीयमान इतरवह्नि-विलक्षणश्चेन्धनप्रभव एव प्रतीयते, एवमिहापि विलक्षणस्य सत्त्वाख्यस्य भोग्यस्य परार्थत्वेऽनुमीयमाने तथाविध एव भोक्ता अधिष्ठाता परश्चिन्मात्र-रूपोऽसंहतः सिध्यति। यदि च तस्य परत्वं सर्वोत्कृष्टत्वमेव प्रतीयते, तथाऽपि तामसेभ्यो विषयेभ्यः प्रकृष्यते शरीरं, प्रकाशरूपेन्द्रियाश्रयत्वात् ; तस्मादपि प्रकृष्यन्ते इन्द्रियाणि, ततोऽपि प्रकृष्टं सत्त्वं प्रकाशरूपं, तस्यापि यः प्रकाशकः प्रकाश्यविलक्षणः, स चिद्रूप इव भवतीति कुतस्तस्य संहतत्वम् ? ॥ २३ ॥

इदानीं शास्त्रफलं कैवल्यं निर्णेतुं दशभिः सूत्रैरुपक्रमते—

## विशेषदर्शिन आत्मभावभावनानिवृत्तिः ॥ २४ ॥

एवं सत्त्व-पुरुषयोरन्यत्वे साधिते यस्तयोर्विशेषं पश्यति अयमस्मादन्य एवंरूपं, तस्य विज्ञातचित्तरूपसत्त्वस्य चित्ते या आत्मभावभावना सा निवर्त्तते, चित्तमेव कर्त्तृ-ज्ञातृ-भोक्तृ इत्यभिमानो निवर्त्तते ॥ २४ ॥

तस्मिन् सति किं भवति ? इत्याह—

## तदा विवेकनिम्नं कैवल्यप्राग्भावं चित्तम् ॥ २५ ॥

यदस्य अज्ञाननिम्नपथं वहिर्मुखं विषयोपभोगफलं चित्तमासीत्, तदिदानीं विवेकमार्गमन्तर्मुखं कैवल्यप्राग्भावं कैवल्यप्रारम्भं सम्पद्यते इति ॥ २५ ॥

अस्मिंश्च विवेकवाहिनि चित्ते येऽन्तरायाः प्रादुर्भवन्ति, तेषां हेतु-प्रतिपादनद्वारेण त्यागोपायमाह—

## तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २६ ॥

तस्मिन् समाधौ स्थितस्य, छिद्रेष्वन्तरायेषु, यानि प्रत्ययान्तराणि व्युत्थानरूपाणि ज्ञानानि, प्राग्भूतेभ्यः व्युत्थानानुभवजेभ्यः संस्कारेभ्योऽहं

समेत्यसंरूपाणि क्षीयमाणेभ्योऽपि प्रभवन्ति, अन्तःकरणोच्छित्तिद्वारेण तेषां हानं कर्त्तव्यमित्युक्तं भवति ॥ २६ ॥

हानोपायश्च पूर्वमेवोक्त इत्याह—

**हानमेषां क्लेशवदुक्तम् ॥ २७ ॥**

यथा क्लेशानामविद्यादीनां हानं पूर्वमुक्तं, तथा संस्काराणामपि कर्त्तव्यं, यथा ते ज्ञानाग्निना प्लुष्टा दग्धबीजकल्पा न पुनश्चित्तभूमौ प्ररोहं लभन्ते, तथा संस्कारा अपि ॥ २७ ॥

एवञ्च प्रत्ययान्तरानुदये स्थिरीभूते समाधौ यादृशस्य योगिनः समाधेः प्रकर्षप्राप्तिर्भवति तथाविधमुपायमाह—

**प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्याते-**
**र्धर्ममेघः समाधिः ॥ २८ ॥**

प्रसङ्ख्यानं यावतां तत्त्वानां यथाक्रमव्यवस्थितानां परस्परविलक्षण-स्वरूपविभावनं, तस्मिन् सत्यप्यकुसीदस्य फलमलिप्सोः, प्रत्ययान्तराणा-मनुदये सर्वप्रकारविवेकख्यातेः परिशेषात् धर्ममेघः समाधिर्भवति। प्रकृष्टमशुक्लाकृष्णं धर्मं परमपुरुषार्थसाधकं मेहति सिञ्चतीति धर्ममेघः; अनेन प्रकृष्टधर्मस्यैव ज्ञानहेतुत्वमित्युपपादितं भवति ॥ २८ ॥

तस्माद्धर्ममेघात् किं भवति ? इत्याह—

**ततः क्लेश-कर्मनिवृत्तिः ॥ २९ ॥**

क्लेशानामविद्यादीनामभिनिवेशान्तानां, कर्मणाञ्च शुक्लादिभेदेन त्रिविधानां, ज्ञानोदयात् पूर्वपूर्वकारणनिवृत्त्या निवृत्तिर्भवति ॥ २९ ॥

तेषु निवृत्तेषु किं भवति ? इत्याह—

**तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्यात्**
**ज्ञेयमल्पम् ॥ ३० ॥**

आव्रियते चित्तमेभिरित्यावरणानि क्लेशाः, त एव मलास्तेभ्योऽपेतस्य तद्विरहितस्य, ज्ञानस्य गगननिभस्य, आनन्त्यादनवच्छेदात्, ज्ञेयमल्पं गणनास्पदं भवति, अक्लेशेनैव सर्वं ज्ञेयं जानातीत्यर्थः ॥ ३० ॥

ततः किम्? इत्याह—

**ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३१ ॥**

कृतो निष्पादितो भोगापवर्गलक्षणः पुरुषार्थः प्रयोजनं यैस्ते कृतार्थाः, गुणाः सत्त्व-रजस्तमांसि, तेषां परिणाम आ-पुरुषार्थसमाप्तेरानुलोम्येन प्रातिलोम्येनाङ्गाङ्गिभावः स्थितिलक्षणः, तस्य योऽसौ क्रमो वक्ष्यमाणः, तस्य परिसमाप्तिर्निष्ठा, न पुनरुद्भव इत्यर्थः ॥ ३१ ॥

क्रमस्योक्तस्य लक्षणमाह—

**क्षणप्रतियोगी परिणामोऽपरान्तनिर्ग्राह्यः क्रमः ॥ ३२ ॥**

क्षणोऽल्पीयान् कालः, तस्य योऽसौ प्रतियोगी क्षणविलक्षणः, परिणामः अपरान्तनिर्ग्राह्यः अनुभूतेषु क्षणेषु पश्चात् सङ्कलनबुद्ध्यैव यो गृह्यते, स क्षणानां क्रम उच्यते, न ह्यननुभूतेषु क्रमः परिज्ञातुं शक्यः ॥ ३२ ॥

इदानीं फलभूतस्य कैवल्यस्य साधारणस्वरूपमाह—

**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं, स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३३ ॥**

समाप्तभोगापवर्गलक्षणपुरुषार्थानां गुणानां यः प्रतिप्रसवः प्रतिलोमस्य परिणामस्य समाप्तौ विकारानुद्भवः क्षणेषु; यदि वा—चिच्छक्तेर्वृत्तिसारूप्यनिवृत्तौ स्वरूपमात्रेऽवस्थानं तत् कैवल्यमुच्यते। न केवलमस्मद्दर्शने चेतनः कैवल्यावस्थायामेवंविधश्चिद्रूपः, यावद्दर्शनान्तरेऽपि विमृश्यमाण एवंरूपोऽवतिष्ठते; तथा हि, संसारदशायामात्मा कर्तृत्व-भोक्तृत्वानुसन्धातृत्वमयः प्रतीयते, अन्यथा यद्ययमीदृशः चेतनस्तथाविधो न स्यात्, तदा ज्ञानक्षणानामिव पूर्वापरानुसन्धानशून्यानामात्मभावे नियतः कर्मफलसम्बन्धो न स्यात् कृतहानाकृताभ्यागमप्रसङ्गश्च। यदि येनैव शास्त्रोपदिष्टमनुष्ठितं कर्म तस्यैव भोक्तृत्वं भवेत्, तदा हिताहितप्राप्ति-परिहाराय सर्वस्य प्रवृत्तिर्घटेत, सर्वस्यैव व्यवहारस्य हानोपादानलक्षणस्य

अनुसन्धानेनैव प्राप्तत्वात्; ज्ञानक्षणानां परस्परभेदेनानुसन्धानशून्यत्वात् तदनुसन्धानाभावे कथञ्चिदपि व्यवहारानुपपत्तेः कर्त्ता भोक्ता अनुसन्धाता यः स आत्मेति व्यवस्थाप्यते। मोक्षदशायां तु सकलग्राह्य-ग्राहकलक्षणव्यवहाराभावाच्चैतन्यमात्रमेव तस्य अवशिष्यते, तत् चैतन्यं चितिमात्रत्वेनैवोपपद्यते, न पुनरात्मसंवेदनेन, यस्मात् विषयग्रहण-समर्थनमेव चितेः रूपं, नात्मग्राहकत्वम्; तथा हि, अर्थस्थित्या गृह्य-माणोऽयमिति गृह्यते, स्वरूपं गृह्यमाणमहमिति, न पुनर्युगपत् बहि-र्मुखताऽन्तर्मुखतालक्षणव्यापारद्वयं परस्परविरुद्धं कर्त्तुं शक्यम्; अत एकस्मिन् समये व्यापारद्वयस्य कर्त्तुमशक्यत्वात् चिद्रूपतयैवावशिष्यते; अतो मोक्षावस्थायां निवृत्ताधिकारेषु गुणेषु चिन्मात्ररूप एवात्माऽवतिष्ठते इत्येव युक्तम्। संसारदशायान्तु एवम्भूतस्यैव कर्त्तृत्वं भोक्तृत्वमनुसन्धातृत्वञ्च सर्वमुपपद्यते; तथा हि, योऽयं प्रकृत्या सहानादिर्नैसर्गिकोऽस्य भोग्य-भोक्तृत्वलक्षणसम्बन्धोऽविवेकख्यातिमूलः, तस्मिन् सति पुरुषार्थकर्त्तव्यता-रूपशक्तिद्वयसद्भावे या महदादिभावेन परिणतिः, तस्यां संयोगे सति यदात्मनोऽधिष्ठातृत्वं, चिच्छायासमर्पणसामर्थ्यं, बुद्धिसत्त्वस्य च सङ्क्रान्त-चिच्छायाग्रहणसामर्थ्यं, चिदवष्टम्भाच्च बुद्धेर्योऽयं कर्त्तृत्व-भोक्तृत्वाध्यव-सायः, तत एव सर्वस्यानुसन्धानपूर्वकस्य व्यवहारस्य निष्पत्तेः किमन्यैः फल्गुभिः कल्पनाजल्पैः? यदि पुनरेवम्भूतमार्गव्यतिरेकेण पारमार्थिक-मात्मनः कर्त्तृत्वाद्यङ्गीक्रियेत, तदाऽस्य परिणामित्वप्रसङ्गः, परिणामि-त्वाच्चानित्यत्वे तस्य आत्मत्वमेव न स्यात्। यथा ह्येकस्मिन्नेव समये एकेनैक-रूपेण न परस्परविरुद्धावस्थाऽनुभवः सम्भवति, तथा यस्यामवस्थाया-मात्मसमवेते सुखे समुत्पन्ने तस्यानुभवितृत्वं, न तस्यामेवावस्थायां दुःखानुभवितृत्वम्; अतोऽवस्थानानात्वात् तदभिन्नस्यावस्थावतो नानात्वं, नानात्वाच्च परिणामित्वान्नात्मत्वं, नापि नित्यत्वम्; अत एव शान्तब्रह्म-वादिभिः साङ्ख्यैरात्मनः सदैव संसारदशायां मोक्षदशायाञ्च एकं रूपमङ्गीक्रियते।

ये तु वेदान्तवादिनश्चिदानन्दमयत्वमात्मनो मोक्षं मन्यन्ते, तेषां न युक्तः पक्षः; तथा हि, आनन्दस्य सुखस्वरूपत्वात् सुखस्य च सदैव संवेद्य-मानतयैव प्रतिभासात् संवेद्यमानत्वञ्च संवेदनव्यतिरेकेणानुपपन्नमिति संवेद्य-संवेदनयोर्द्वयोरभ्युपगमात् अद्वैतहानिः। अथ सुखात्मकत्वमेव तस्योच्येत, तत् विरुद्धधर्माध्यासादनुपपन्नं, न हि संवेदनं संवेद्यञ्चैकं भवितु-मर्हतीति। किञ्च, अद्वैतवादिभिः कर्मात्म-परमात्मभेदेन आत्मा द्विविधः स्वीकृतः; इत्यञ्च तत्र येनैव रूपेण सुख-दुःखभोक्तृत्वं कर्मात्मनः, तेनैव रूपेण यदि परमात्मनः स्यात्, तदा कर्मात्मवत् परमात्मनः परि-णामित्वमविद्यास्वभावत्वं च स्यात्। अथ न तस्य साक्षात् भोक्तृत्वं, किन्तु

तदुपढौकितमुदासीनतया अधिष्ठातृत्वेन स्वीकरोति, तदा अस्मद्दर्शनानुप्रवेशः, आनन्दरूपता च पूर्वमेव निराकृता। किञ्च, अविद्यास्वभावत्वे निःस्वभावत्वात् कः शास्त्राधिकारी ? न तावन्नित्यनिर्मुक्तत्वात् परमात्मा, नापि अविद्यास्वभावत्वात् कर्मात्मा ; ततश्च सकलशास्त्रवैयर्थ्यप्रसङ्गः। अविद्यामयत्वे च जगतोऽङ्गीक्रियमाणे कस्याविद्येति विचार्य्यते— न तावत् परमात्मनः, नित्यमुक्तत्वात् विद्यारूपत्वाच्च ; कर्मात्मनोऽपि परमार्थतो निःस्वभावतया शशविषाणप्रख्यत्वे कथमविद्यासम्बन्धः ? अथोच्यते, एतदेवाविद्यायाः अविद्यात्वं यदविचारणीयत्वम्, अविचारणीयत्वं नाम यैवंहिविचारेण दिनकरस्पृष्टनीहारवत् विलयमुपयाति साऽविद्येत्युच्यते ; मैवं, यद्वस्तु किञ्चित् कार्य्यं करोति तदवश्यं कुतश्चिद्भिन्नमभिन्नं वक्तव्यम्, अविद्यायाश्च संसारलक्षणकार्य्यकर्तृत्वमवश्यमङ्गीकर्तव्यं, तस्मिन् सत्यपि यदि अनिर्वाच्यत्वमुच्यते, तदा कस्यचिदपि वाच्यत्वं न स्यात्, ब्रह्मणोऽप्यवाच्यत्वप्रसक्तिः ; तस्मादधिष्ठातृतारूपव्यतिरेकेण नान्यदात्मनो रूपमुपपद्यते, अधिष्ठातृत्वं च चिद्रूपत्वमेव, तद्व्यतिरिक्तस्य धर्मस्य कस्यचित् प्रमाणानुपपत्तेः।

यैरपि नैयायिकादिभिरात्मा चेतनायोगाच्चेतन इत्युच्यते, चेतनाऽपि तस्य मनःसंयोगजा ; तथा हि, इच्छा-ज्ञान-प्रयत्नादयो ये गुणास्तस्य व्यवहारदशायाम् आत्म-मनःसंयोगादुत्पद्यन्ते, तैरेव च गुणैः स्वयं ज्ञाता कर्त्ता भोक्तेति व्यपदिश्यते, मोक्षदशायां तु मिथ्याज्ञाननिवृत्तौ तन्मूलानां दोषाणामपि निवृत्तिः, तेषां बुद्ध्यादीनां विशेषगुणानामत्यन्तोच्छित्तिः, स्वरूपमात्रप्रतिष्ठत्वमात्मनोऽङ्गीकृतं, तैषामयुक्तः पक्षः ; यतस्तस्यां दशायां नित्यत्व-व्यापकत्वादयो गुणाः आकाशादीनामपि सन्ति ; अतस्तद्वैलक्षण्येनात्मनश्चिद्रूपत्वमवश्यमङ्गीकार्य्यम्। आत्मत्वलक्षणजातियोग इति चेत्, न ; सर्वस्यैव तज्जातियोगः सम्भवति ; अतो जातिभ्यो वैलक्षण्यमात्मनोऽवश्यमङ्गीकर्त्तव्यं, तस्याधिष्ठातृत्वं चिद्रूपतयैव घटते नान्यथा।

यैरपि मीमांसकैः कर्मकर्तृरूप आत्मा अङ्गीक्रियते, तेषामपि न युक्तः पक्षः ; तथा हि, अहं-प्रत्ययग्राह्य आत्मेति तेषां प्रतिज्ञा ; अहं-प्रत्यये च कर्तृत्वं कर्मत्वञ्चात्मन एव ; न च एतत् विरुद्धत्वादुपपद्यते, कर्तृत्वं प्रमातृत्वं, कर्मत्वञ्च प्रमेयत्वं, न चैतद्विरुद्धधर्माध्यासो युगपदेकस्य घटते, यत् विरुद्धधर्माध्यस्तं न तदेकं, यथा भावाभावौ ; विरुद्धे च कर्तृत्व कर्मत्वे ? अत्रोच्यते—न कर्तृत्व-कर्मत्वयोर्विरोधः, किन्तु कर्तृत्व-करणत्वयोः। नैन एतदुक्तं, विरुद्धधर्माध्यासस्य तुल्यत्वात् कर्तृत्व-करणत्वयोरेव विरोधः, न कर्तृत्वकर्मत्वयोः ; तस्मादहं-प्रत्ययग्राह्यत्वं परिहृत्य आत्मनोऽधिष्ठातृत्वमेवोपपन्नं, तच्च चेतनत्वमेव।

यैरपि द्रव्यबोधपर्य्यायभेदेन आत्मनोऽव्यापकस्य शरीरपरिमाणस्य परिणामित्वमिष्यते, तेषाम् उत्थानपराहत एव पक्षः; परिणामित्वे चिद्रूपताहानेः; चिद्रूपताऽभावे किमात्मन आत्मत्वम्? तस्मादात्मन आत्मत्वमिच्छता चिद्रूपत्वमेवाङ्गीकर्त्तव्यं, तच्चाधिष्ठातृत्वमेव।

केचित् कर्त्तृरूपमेवात्मानमिच्छन्ति; तथा हि, विषयसान्निध्ये या ज्ञानलक्षणा क्रिया समुत्पन्ना, तस्यां विषयसंवित्तिः फलं, तस्याञ्च फलरूपायां संवित्तौ स्वरूपं प्रकाशरूपतया प्रतिभासते, विषयश्च ग्राह्यतया, आत्मा च ग्राहकतया, घटमहं जानामीत्याकारेण तस्याः समुत्पत्तेः। क्रियायाश्च कारणं कर्त्तैव भवति, इत्यतः कर्त्तृत्वं भोक्तृत्वञ्चात्मनो रूपमिति। तदनुपपन्नं, यस्मात्तासां संवित्तीनां स किं कर्त्तृत्वं युगपत् प्रतिपद्यते? क्रमेण वा? युगपत् कर्त्तृत्वे क्षणान्तरे तस्य कर्त्तृत्वं न स्यात्। अथ क्रमेण कर्त्तृत्वम्? तदैकरूपस्य न घटते। एकेन रूपेण चेत् तस्य कर्त्तृत्वं, तदैकस्य सदैव सन्निहितत्वात् सर्वफलमेकरूपं स्यात्। अथ नानारूपतया तस्य कर्त्तृत्वम्? तदा परिणामित्वम्; परिणामित्वाच्च न चिद्रूपत्वम्; अतश्चिद्रूपत्वमात्मन इच्छद्भिर्न साक्षात्कर्त्तृत्वमङ्गीकर्त्तव्यं, यादृशमस्माभिः कर्त्तृत्वमात्मनः प्रतिपादितं कूटस्थस्य नित्यस्य चिद्रूपस्य, तदेवोपपन्नम्।

एतेन स्वप्रकाशस्य आत्मनो विषयसंवित्तिद्वारेण ग्राहकत्वमभिव्यज्यते इति ये वदन्ति तेऽपि अनेनैव निराकृताः।

केचित् विमर्षात्मकत्वेन आत्मनश्चिन्मयत्वमिच्छन्ति, ते ह्याहुः, न विमर्षव्यतिरेकेण चिद्रूपत्वमात्मनो निरूपयितुं शक्यं, जडवैलक्षण्यमेव चिद्रूपत्वमुच्यते, तच्च विमर्षव्यतिरेकेण निरूप्यमाणं, नान्यथा अवतिष्ठते। तदनुपपन्नम्; इदमित्थमेवरूपमिति यो विचारः स विमर्ष इत्युच्यते, स चास्मिताव्यतिरेकेण नोत्थानमेव लभते, तथा हि, आत्मन्युपजायमानो विमर्षः अहमेवम्भूत इत्यनेन आकारेण संवेद्यते; तत्राह-शब्दाभिन्नस्य आत्मलक्षणस्य अर्थस्य तत्र स्फुरणान्न तत्र विकल्पस्वरूपताऽतिक्रमः; विकल्पश्चाध्यवसायात्मा बुद्धिधर्मः, न चिद्धर्मः, कूटस्थनित्यत्वेन चितेः सदैकरूपत्वात्, नित्यत्वान्नाहङ्कारानुप्रवेशः, तदनेन सविमर्षत्वमात्मनः प्रतिपादयता बुद्धिरेवात्मत्वेन भ्रान्त्या प्रतिपादिता, न प्रकाशात्मनः परस्य पुरुषस्य स्वरूपमवगतमिति।

इत्थं सर्वेष्वेव दर्शनेष्वधिष्ठातृत्वं विहाय नान्यदात्मनो रूपमुपपद्यते। अधिष्ठातृत्वञ्च चिद्रूपत्वं, तच्च जडाद्वैलक्षण्यमेव, चिद्रूपतया यदधितिष्ठति तदेव भोग्यतां नयति, यच्च चेतनाधिष्ठितं तदेव सकलव्यापारयोग्यं भवति। एवञ्च सति नित्यत्वात् प्रधानस्य व्यापारनिवृत्तौ यदात्मनः कैवल्यमस्माभिरुक्तं, तद्विहाय दर्शनान्तराणां नान्या गतिः; तस्मादिद-

मेव युक्तमुक्तं, वृत्तिसारूप्यपरिहारेण स्वरूपे प्रतिष्ठा चितिशक्तेः कैवल्यम्।

तदेवं सिद्धान्तरेभ्यो विलक्षणां सर्वसिद्धिमूलभूतां समाधिसिद्ध-मभिधाय, जात्यन्तरपरिणामलक्षणस्य च सिद्धिविशेषस्य प्रकृत्यापूरणमेव कारणमित्युपपाद्य, धर्मादीनां प्रतिबन्धकनिवृत्तमात्रे एव सामर्थ्यमिति प्रदर्श्य, निर्माणचित्तानामस्मितामात्रादुद्भव इत्युक्त्वा, तेषाञ्च योगिचित्त-मेवाधिष्ठापकमिति प्रदर्श्य, योगिचित्तस्य चित्तान्तरवैलक्षण्यमभिधाय, तत्कर्मणामलौकिकत्वञ्चोपपाद्य, विपाकानुगुणानां वासनानामभिव्यक्ति-सामर्थ्यं कार्यकारणयोरैक्यप्रतिपादनेन व्यवहितानामपि वासनानामानन्तर्यमुपपाद्य, तासामानन्त्येऽपि हेतु-फलादिद्वारेण हानमुपदर्श्य, अतीतादिष्वध्वसु धर्माणां सद्भावमुपपाद्य, विज्ञानवादं निराकृत्य, साकारवादञ्च प्रतिष्ठाप्य, पुरुषस्य ज्ञातृत्वमुक्त्वा, चित्तद्वारेण सकलव्यवहार-निष्पत्तिमुपपाद्य, पुरुषसत्त्वे प्रमाणमुपदर्श्य, कैवल्यनिर्णयाय दशभिः सूत्रैः क्रमेणोपयोगिनोऽर्थानभिधाय, शास्त्रान्तरेऽप्येतदेव कैवल्यमित्युपपाद्य कैवल्यस्वरूपं निर्णीतमिति व्याकृतः कैवल्यपादः।

सर्वे यस्य वशाः प्रतापवसतेः पादान्तसेवाऽऽनति-
प्रभ्रश्यन्मुकुटेषु मूर्द्धसु दधत्य.ज्ञां धरित्रीभृतः।
यद्वक्त्राम्बुजमाप्य गर्भसमं वाग्देवता संश्रिता
स श्रीभोजपतिः फणाधिपतिकृतसूत्रेषु वृत्तिं व्यधात्॥

इति श्रीधारेश्वरभोजदेवविरचितायां राजमार्त्तण्डाभि-
धायां पातञ्जलवृत्तौ कैवल्यपादश्चतुर्थः।

समाप्तश्चायं ग्रन्थः।

---